चातुर्मास्योद्यापनविधये






विष्णुप्रतिमा

गोदानार्थं

वेदचतुष्टयी




कार्त्तिकोद्यापनार्थं विष्णुप्रतिमास्थाने स्थाप्यमिदम्।



## पञ्चगव्यम्

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं च पवित्रं कायशोधनम् । गोमूत्रे गोमये क्षेप्यं ते संक्षेपे घृते तथा । तानि दध्नि प्रक्षेप्यानि तत्सर्वं पयसान्तरे । एकीकृत्य तु तत्सर्वं कुशोदकविमध्यगाम् ।

| | | |
|---|---|---|
| देवस्यत्वा कुशोदकम् ६ | दधिक्राव्णेति वै दधि ✿ ४ | देवस्य त्वा |
| गायत्र्येव समादाय गोमूत्रं ✿ १ | आप्यायस्वेति च क्षीरं ✿ ५ | तेजोसीति घृतं प्रोक्तं ✿ ३ |
| आपो हि ष्ठेति | गन्धद्वारेति गोमयं ✿ २ | देवस्यत्वा |

# अन्त्येष्टिविषये



वा० गायत्री



मध्ये भैरवाय



द० ब्रह्माय



भूतपञ्चकं सभैरवम्













अग्निकुण्डम्



# कर्मकाण्डम् ।

## अथ कारणसूक्तानि ॥

### आदौ विष्णोः ॥ १ ॥

गोविन्दं कमलासनं त्रिपुरजिच्छक्रादिदेवैः स्तुतं कुर्वाणं करसात्सुदर्शनगदासच्छार्ङ्गकौक्षेयकम् । विश्वाध्यक्षमनन्तमूर्त्तिमसृतं श्रीवल्लभं शाश्वतं धर्माधर्मवहिष्कृतं प्रणयिनं ध्याये महासिद्धिदम् ॥ ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमा कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वऽधि क्षियन्ति भुवनानि विश्वा ॥ ॥ प्रति सप्तोनाभरुः सर्वहरिर्वैन्द्रो हरिस्तुतिर्द्विस्त्रिष्टुवन्तम् ॥ ॥ प्रतेमहे विदथे शंसि शं हरी प्रतिवने वनुषो हर्यतां मदम् । घृतन्नयो हरिभिश्चारु सेचत आत्वा विशन्तु हरिवर्षमङ्गिरः ॥ १ ॥

हरिं हि योनिमभि य समस्वरन्हिन्वन्तो हरिदिव्यं यथा सदः। अयस्पृणन्ति हरिभिर्नधेनवः इन्द्राय शूषं हरिवर्त्तमर्चत॥ २॥ सो अस्य वज्रो हरितो य आयसो हरिन्निकामो हरिरा गभस्त्योः। द्युम्नीसुशिप्रो हरिमन्युसायक इन्द्रे निरूपा हरिता मिमिक्षरे॥ ३॥ दिवि न केतुरधिधाविहर्यतो विव्यचद्वज्रो हरितो नरंह्या। तुददहिं हरिशिप्रो आयसः सहस्रशोका अभवद्धरिंभरः॥ ४॥ त्वन्तमहर्यथा उपस्तुताः पूर्वेभिरिन्द्र हरिकेश यज्ुर्भिः। त्वं हर्यस्य तव विश्वमुक्त्यं मासामिराधो हरिजातो हर्यताम्॥ ५॥ त्वां वज्रिणं मन्दिनं स्तोम्यमद इन्द्रं रथे वहतो हर्यता हरी। पुरूण्यस्मै सवनानि हर्यत इन्द्राय सोम हरयो दधन्विरे॥६॥ अरङ्कामाय हरयो दधन्विरे स्थिराय हिन्वन्हरयो हरीत्तरा। अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवर्तमानशे॥ ७॥ हरिश्मशारुन्हरिकेश आयसस्तुरस्पे ययो हैरिप अवर्धत। अर्वद्भिर्यो हरिभिर्वाजिनी वस्वरति विश्वा

दुरिता पारिषद्धरी ॥ ८ ॥ स्रुवेव यास्य हरिणी विपेत्तत-
श्शिप्रेवाजाय हरिणीद्विध्वतः । प्रयथ्र्यते चमसे सन्मृज-
द्धरी पीत्वा मदस्य हर्यतस्यन्धसः ॥९॥ उतस्य सद्म हर्य-
तस्य पस्त्योरन्योन वाजं हरिवां अचिक्रदत् । महीचिद्धि
धिषणा हर्यदोजसा बृहद्वयो दधिरे हर्यताश्चिदा ॥ १० ॥
आ रोदसी हर्यमानो महित्वा नव्यं नव्यं हर्यसि मन्मनु-
प्रियम् । प्रायस्त्योमसुरहर्यतङ्गोराविष्कृधि हरये सूर्याय
॥ ११ ॥ आत्वा हन्तं प्रयजो जनानां रथे वहन्तु हरि-
शिप्रमिन्द्र । पिबा यथा प्रतिभृतस्य मध्वोहर्यन्यज्ञं सदमादे
दशोनिम् ॥१२॥ अपः पूर्वेषां हरिवः सुतानामथो इदं सवनं
केवलन्ते । समद्धि सोमं मधुमन्तमिन्द्रमऽत्राबृषञ्जठरा आ-
बृषस्व ॥१३॥ इति हरिपञ्चाशिका ॥ ॥ ओं अयन्ते पञ्च-
बार्हत्वा मन्द्रैः ॥ अयन्ते अस्तु हर्यतः सोम आ हरिभिः
सुतः । जुषाण इन्द्र हरिभिर्न आगह्या तिष्ठ हरितं रथम् ॥
हर्यन्त्सप्रसमर्चयः सूर्यं हर्यन्न रोचयः । विद्वाश्चिकित्वा हर्य-

श्ववर्धस इन्द्रविश्वा अभिश्रियाः ॥ द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् । अधारयद्धरितोभूरिभोजनं ययोरन्तर्हरिश्चरत् ॥ जिज्ञानो हरितो वृषा विश्वमाभासि रोचनम् । हर्यश्वो हरितन्धत्तु आयुधमावज्रबाहोर्हरिम् ॥ इन्द्रो हर्यन्तमर्जुनं वज्रं शुक्रैरभीवृतम् । अपावृणोद्धरिभिरद्रिभिः सुतमुद्गा हरिभिराजत ॥ १ ॥ आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः । मा त्वा किश्चिन्नियमन्विन्नपाशिनोतिधन्वेवतामिह ॥ वृत्रखादो बलं रुजः पुरान्दर्मो अपामजः । स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढां चिदारुजः । गम्भीरमुदधेरिव क्रतुं पुष्यसि गा इव । प्रसु गोपाय वसन्धेनवो यथा हृदङ्कुल्या इवासत । आनस्तुजं रयिंभरां शन्न प्रति जानते । वृक्षं पक्कं फलं मङ्कीवध्वन्नहीन्द्र सम्पारणं वसु ॥ सुयुरिन्द्र सुराळासिः सदिष्टः स्वयशस्तरः । सवावृधान ओजसा पुरुष्टुत भवानः सुश्रवस्तमः ॥ तत

ऋग्वेदे विष्णु ... सूक्तं ... मनुहोमेनाग्नौ ... [illegible]

कायोपार्जितपापनिवारणार्थं पितुर्विष्णोरऽतीतवर्तमानभविष्यदात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थंदशविधपापनिष्कृत्यर्थं कुम्भीपाकादि–असिपत्रवनान्तेभ्यः समस्तनरकेभ्यः समुद्धरणार्थं नारायणबलिविधाननिमित्तं प्रथमे विष्णुश्राद्धे वा द्वितीये वा १२ विष्णुश्राद्धे पृथ्वीरूपो विष्णुः "श्रीसहितः केशवः" इत्यादि प्रीयतां प्रीतोस्तु ॥ इति विष्णुकारणानि ॥ १ ॥

## ॥ अथ ब्रह्मकारणानि ॥ २ ॥

ब्रह्माणं चतुराननं सुरसरित्स्फूर्जत्प्रवालोल्लसद्वीचीन्यग्रकमण्डलुं जपवटीं सत्पुस्तकं पुष्करम् । श्रीदण्डासनबन्धनाऽभयवरान्हस्तैर्दधानं सदा वेदाभ्यासविशारदं सुजठरं शोणद्युतिं चिन्तयेत् ॥ ॥ ॐब्रह्मा देवानां पदवी कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां सुधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ इन्दानः पञ्च जगतं वृजुः चतुष्कम् ॥ इन्दा नो अग्निं वनवद्वनुष्यतः कृतं ब्रह्मा शशवदातहव्ययत । जातेव जातं मतिसप्तस्य ते यं

य्यं यजुष्कृणुते ब्रह्मणस्पतिः[1] ॥ वीरेभिर्वीरान्वनवन्वनुष्यतो गोभी रयिं पप्रथद्बोधतित्मना । तोकाञ्च तस्य तनयं च वर्धते [2]यं० ॥ सिन्धुर्न क्षोदः शमीवां ऋघायतो वृषेव वध्रीं रभिवष्टोजसा । अग्निरिव प्रसितिनाहवत्तवे यं य्यं यजुं०[3] ॥ तस्मा अर्षन्ति दिव्या असश्चताः ससत्त्वभिः प्रथमो गोषु गच्छति । अनिभृष्टतविषिर्हन्त्योजसा [4]यं० ॥ तस्मा इद्विषे धुनयन्त सिन्धवो च्छिद्रा शर्म दधिरे पुरूणि । देवानां सुम्ने सुभगः स एधते यं य्यं यजुं कृणुते ब्रह्मणस्पतिः ॥ १ ॥ ऋजु ऋच्छंसो वनवद्वनुष्यतो देवयन्निदं देवयन्तमभ्यसत् । सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्वे विभजति भोजनम् ॥ यजस्व वीर प्रविहिमना यतो भद्रम्मनः कृणुष्व वृत्रतूर्ये । हविष्कृणुष्व सुभगो यथा ससि ब्रह्मणस्पते रव आवृणीमहे ॥ स इज्जनेन सविशास जन्मना स पुत्रैर्वा जम्भरते धनानृभिः । देवानां य्यः पितरमाविवासति श्रद्धमना हविषा ब्रह्मणस्पतिम् ॥ यो

असौ हव्यैर्घृतवद्भिरविधत्प्र प्राचानयति ब्रह्मणस्पतिः । उरुष्यती मंहसो रक्षतीरिषोऽहोश्चिदस्मा उरु चक्रिरद्भुतः ॥ २ ॥ तत ऋग्वेदे ब्रह्मध्रुव सूक्तं हुत्वा अनेन० पितुर्विष्णोः प्रथमे विष्णुश्राद्धे २ वा १३ विष्णुश्राद्धे अपूरूपो ब्रह्मा प्रीयतां प्रीतोऽस्तु ॥ नरकोद्धरणमस्तु ॥ इति ब्रह्मकारणानि ॥ २ ॥

## अथ शिवकारणानि ॥ ३ ॥

शिवो भूत्वा मह्यमग्ने अथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशाः सर्वाः स्वं योनिमिहासदः ॥ ॥ शम्भुं शूलपिनाकसोमकलशभ्राजिष्णुहस्ताम्बुजं देव्याऽलङ्कृतवामपार्श्वमुरगाधीशस्फुरत्कङ्कणम् । गङ्गागर्जितगर्भजूटममलं चन्द्रार्धमौलिप्रभं कीनाशक्रमनाशनिश्चितधियं भस्माङ्गरागं भजे ॥ ॐवृषभं वृषभो वैराजा शाक्करो वा सपत्नघ्नमाऽनुष्टुभं महापान्त्यन्तम् ॥ वृषभं मासमन्नानां सपत्नानां विषासहिम् । हन्तारं शत्रूणां कृधि विराजङ्गोपतिं गवम् ॥ अहमस्मे सपत्नहेन्द्र इवारिष्टो अक्षतः । अधः सपत्नामे पदो-

रिमे सर्वे अभिष्टिताः ॥ अत्रैव वोपि नह्याम्युभे आर्त्वी
इवज्यया । वाचस्पते निषधे मान्यथा मादधरं वदान् ॥
अभिभूरिहमागम विश्वकर्मणे धाम्ना आवश्चित्तमावो व्रत-
मावोहं समितिन्दधे ॥ योगक्षेमं व आदायाहं भूयांसमु-
त्तम । अधस्पदान्स उद्वत मण्डूका इवोदकान्मण्डूका उ-
दगादिव ॥ १ ॥ येन सप्तोना मानवः शिवसङ्कल्पो मानसम् ॥
येनेदं भूतं भुवनं भविष्यत्परिगृहीतमऽमृतेन सर्वम् । येन
यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ येन
कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदिथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे[2]० ॥ यत्प्रज्ञानमुत चेतो
धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किञ्चन
कर्म क्रियते तन्मे[3]०॥ यज्जाग्रतो दूरमुदेति दैवं तदु स्वप्तस्य
तथैवेति । दूरङ्गमं ज्योतिष्यं ज्योतिरेकं तन्मे[4]० ॥ यस्मि-
न्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे[5]० । सुषारथिरश्वानिव

यन्मनुष्यान्नेनीयते भीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजरं यविष्ठं तन्मे० ॥ यदत्र षष्टिं त्रिशतं शरीरं यज्ञस्य गुह्यन्नवनाभमाद्यम् । दशं पञ्चत्रिंशतं च यत्परं तन्मे मनः०॥ ये पञ्चपञ्चाशतं शतञ्च सहस्रं च नियुतमर्बुदं च । तेन यज्ञचित्तेष्ट गातुं शरीरं तन्मे० ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः पुरस्तात् । तस्य योनिं परिपश्यन्ति धीरास्तन्मे० ॥ येन कर्माणि प्रचरन्ति धीरा विप्रा वाचा मनसा कर्मणा वा । यां संविदमनुसंयन्ति प्राणिनस्तन्मे० ॥ ये मनो हृदयं ये च देवा ये अन्तरिक्षे बहुधा चरन्ति । ये श्रोत्रञ्चक्षुषी सञ्चरन्ते करणे तन्मे० ॥ येन द्यौरुग्रा पृथिवी चान्तरिक्षं ये पर्वताः प्रदिशो दिशश्च । येनेदं जगद्व्याप्तं प्रजानां तन्मे० ॥ येनेदं सर्वं जगतो बभूव ये देवा अपि महतो जातवेदाः । तदेवाग्निस्तपसो ज्योतिरेकं तन्मे० तत ऋग्वेदे रुद्रकेतु सूक्तं हुत्वा । अनेन मन्त्रहोमेन पितुर्विष्णोः प्रथमे वा २ वा ३ वा ४ त्रयो-

द्रशो विष्णुश्राद्धे तेजोरूपः शिवः" प्रीयतां प्रीतोस्तु ॥ इति शिवकारणानि ३ ॥

## अथ यमकारणानि ॥ ४ ॥

ॐयमो दाधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणाद्वायुरक्षितः ॥ ॥ स्फूर्जत्सैरिभवाहनं पितृपतिं प्रेङ्खत्परेतावलिं धर्माधर्मविचारचारुचरितं द्राघिष्ठदण्डाश्रितम् । रागद्वेषविविक्तबुद्धिविभवं विष्वक्षु संवर्तनं विश्वग्रासविशारदं व्यवहितं तं धर्मराजं भजे ॥ परीवांसं षोडश यमो यामं षष्टी लिङ्गोक्तदेवता द्वादशी श्वभ्यां पर अनुष्टुभ उपान्त्या बृहती यामायनाः परे पञ्च ॥ परीवांसं प्रवतो महीरनु बाहुभ्यः पन्थामनुपस्पृशानाम् । वैवस्वन्तं सङ्गमनञ्जनानां यमं राजानं हविषा दुवस्य ॥ यमो न गातुं प्रथमोविवेद नैषा गव्यूतिरपभर्तार वा उ । यत्रानः पूर्वे पितरः परेयुरेना जज्ञानाः पन्थ्या अनस्वाः ॥ मातलीकव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्कभिर्वावृधानः । यांश्च

देवा वृधुर्ये च देवाः स्वाहान्ये स्वधयान्ये मदन्ति ॥ इमं यज्ञमप्रस्तरमाहिंसीदाङ्गिरोभिः पितृभिः संविदानः । आत्वा मन्ता कविशस्त्वा वहन्ते नाराजन्हविषा मादयस्व । अङ्गिरोभिरागहि यज्ञे येभिर्यम वै रूपैरिह मादयस्व । विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिषि निषेद्य ॥ १ ॥ अङ्गिरसो नः पितरो न वग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनस्ये स्याम ॥ प्रेहि प्रेहि पथिभिः पूर्वेभिर्यत्रा नः पूर्वे पितरः परेयुः । उभा राजानः स्वधया मदन्ता यमं पश्यामि वरुणश्च देवम् ॥ सङ्गच्छस्व पितृभिः संय्यमनेष्टापूर्तेन परमे व्योमन् । हित्वा यावद्यं पुनरस्तमेति सङ्गच्छस्व तन्वां सुवर्चाः ॥ अपेतवींत विच सर्पतातोस्मा एतम्पितरो लोकमक्रन् । अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ अतिद्रवसारमेयौ श्वानौ चतुरक्षौ शबलौ साध्वना पथौ । अथा पितन्सुविदत्रामुपेहि यमेन

ये सदमादं मदन्ते ॥ यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथि रक्षी नृचक्षसौ । ताभ्यामेनं परिदेहि राजन्स्वस्ति चास्मा अनमीवञ्च धेहि ॥ उरूणसावसुतृतौ उडम्बलौ यमस्य दूतौ चरतो जनां अनु । तावस्मभ्यं दृशये सूर्याय पुनर्दाता वसुमध्ये ह भद्रम् ॥ यमाय सोमं सुनोत यमाय जुहुता हविः । यमं ह यज्ञे गच्छत्यऽग्निर्दूतो अरङ्कृतः । यमाय घृतवद्धविर्जुहोता प्रच तिष्ठत । स नो देवेष्वाऽयमद्दीर्घमायुः प्रजीवस्ये यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन । इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दांसि सर्वता यम आहिताः ॥ ध्यानम् ॥ कृतान्तं महिषारूढं दण्डहस्तं भयानकम् । कालपाशधरं देवं ध्याये दक्षिणदिक्पतिम् ॥ ॥ यत्त इति द्वादशमानुष्टभं मन आवर्तनं जेपुः ॥ ॥ यमादहं वैवस्वतात्सुबन्धोर्मन आभरम् । जीवातवे न मर्तवेऽथो अरिष्टतातये ॥ यत्ते यमं वैवस्वतं

मनो जगाम दूरकम् । तत्त आवर्तयामसीह क्षयाय जीवसे ॥ यत्ते देवं यत्पृथिवीं मनो जगाम दूरकम् । तत्त आवर्तयामसीह क्षयाय जीवसे ॥ यत्ते भूमिं चतुष्षष्टिं मनो० ॥ यत्ते चतस्रः प्रदिशो मनो० ॥ यत्ते समुद्रमर्णवं मनो० यत्ते मरीचिः प्रवतो मनो० यत्ते आपो यदोषधीर्मनो० ॥ यत्ते सूर्यं यदोषसं मनो० ॥ यत्ते पर्वताद्बृहतो मनो० ॥ यत्ते विश्वमिदं जगन्मनो० ॥ यत्ते परापरावतो मनो० ॥ यत्ते भूतं च भव्यं च मनो जगाम दूरकम् । तत्त आवर्तयामसीह क्षयाय जीवसे ॥ १३ ॥

ध्यानं । कालपत्न्यायुतं देवं लोकेशं लोकभावनम् । विचारज्ञं महाबाहुं यममावाहयाम्यहम् ॥ ॥ बृहस्पतिपुरोहिता देवा देवानां देवा देवाः प्रथमजा देवा देवेषु पराक्रमध्वम् । प्रथमा द्वितीयेषु द्वितीया तृतीयेषु त्रिरेकादशस्त्रियस्त्रिंशा अनु वा आरभे इदं शकेयं यदिदङ्करोमि, तेमाऽवत ते माजिन्वतास्मिन् ब्रह्मण्यस्मिन् क्षेत्रे-

ऽस्यामाशिष्यऽस्यां पुरोधायामस्यां देवहूत्याम् ॥ ॥ यस्य कौष्टजगतः पार्थिवस्यैकयद्वशी । यमं भङ्गश्रवो गाय यो राजा न परोध्यः । यमङ्गाय भङ्गश्रवो यो राजा न परोध्यः । येनाऽपो नद्यो धन्वानि येन द्यौः पृथिवी दृढा । हिरण्यकेशान्सुदुरा हिरण्याक्षानयः शफान् । अश्वा वनस्यतो दानं यमो राजाधितिष्ठति । अयं य्योसि यस्यत इदं शर एतेन त्वमत्र शीर्षण्वनेधि । इदमस्माकं भुजे भोगाय भोगात् ॥ उदह्यग्ने अधिमातुः पृथिव्या विश आविश महतः सधस्थात् । आशुन्त्वाजो दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् । धनञ्जयः सहमानः पृतन्युरग्न इषमूर्जं यजमानाय देहि । विश्वाः पृतनाः सहमानाः सहोभिरस्मन्नो देहि बहुधा विरूपम् । य्यत्प्रजा अनुजीवन्ति सर्वाः ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्नये त्वा वैश्वानराय त्रैष्टुभेन छन्दसाऽहरूपदधे ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

पूष्णो हस्ताभ्यामग्नये त्वा वैश्वानरायानुष्टुभेन च्छन्दसा रात्रिमुपदधे ॥ १ ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्मणो वसुनीथ यज्ञैः । घृतेन ते तनुं वर्धयामि सत्याः सन्तु यजमानस्य कामाः ॥ अग्निर्होता नो अध्वरे वाजी सन्परिणीयते देवो देवेषु यज्ञियाः ॥ परित्रिविष्ट्यध्वरं यात्यग्नीरथीरिव, आदेवेषु प्रियो दधत् ॥ परिवाजः पतिः कविरग्निर्हव्या न्यक्रमेत् । दधद्रत्नानि दाशुषे ॥ परित्वाग्निं पुरं व्वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवे दिवे, हन्तारं भङ्गुरावतम् । परि प्रागाद्दिवो अग्नी रक्षोहामीव चातनः । सीदन्विश्वा अपद्विषो दहद्रक्षांसि विश्वा । यच्चितःस्थ परिचित ऊर्ध्वाश्रितःश्रयध्वम् । प्रजामस्मे रयिमस्मे नियच्छत ॥ २ ॥ ॐतस्य यज्ञस्याश्व प्रतिजगृहुषोऽर्धमिन्द्रियस्याऽपराक्रमत् । स एतेन प्रतिगृह्णात् सोऽर्धमिन्द्रियस्योपाधत्त ॥ य एतं विद्वानश्वं प्रतिगृह्णात्यर्धमिन्द्रियस्योपाधत्ते ॥ य एतद्विद्वान्प्रतिगृह्णात्य-

र्धमिन्द्रियस्यापक्रामति ॥ तस्याग्नेर्हिरण्यं प्रतिगृहुषस्तृती-यमिन्द्रियस्यापक्रामत् स एतेन प्रतिगृह्णात् स तृतीयमि-न्द्रियस्योपाधत्त ॥ य एतद्विद्वान्हिरण्यं प्रतिगृह्णाति तृती-यमिन्द्रियस्योपाधत्ते । य एतद्विद्वान्प्रतिगृह्णाति तृतीयमि-न्द्रियस्यापक्रामति । तस्य रुद्रस्य गां प्रतिजगृहुषश्चतुर्थ-मिन्द्रियस्यापक्रामत् । स एतेन प्रतिगृह्णात् स चतुर्थमि-न्द्रियस्योपाधत्त । य एतद्विद्वान् गां प्रतिगृह्णाति स चतु-र्थमिन्द्रियस्यापाक्रामति । तस्य बृहस्पतेर्वासः प्रतिजगृहुषः पञ्चममिन्द्रियस्यापक्रामत् । स एतेन प्रतिगृह्णात् स पञ्च-ममिन्द्रियस्योपाधत्ते ॥ य एतद्विद्वान्वासः प्रतिगृह्णाति पञ्चममिन्द्रियस्योपाधत्ते । य एतद्विद्वान्प्रतिगृह्णाति पञ्च-ममिन्द्रियस्योपक्रामति ॥ २ ॥ तस्योत्तानस्याऽङ्गिरसस्या-प्राणत्प्रतिजगृहुषः षष्ठमिन्द्रियस्योपक्रामत् स एतेन प्रति-गृह्णात् षष्ठमिन्द्रियस्योपाधत्त । य एतद्विद्वान्प्राणत्प्रति-गृह्णाति षष्ठमिन्द्रियस्योपाधत्ते । यएतद्विद्वान्प्रतिगृह्णाति-

षष्ठमिन्द्रियस्योपक्रामति। तस्य प्रजापतेः पुरुषं प्रतिजगृहुषः सप्तममिन्द्रियस्योपक्रामत् स एतेन प्रतिगृह्णात् सप्तममिन्द्रियस्योपाधत्ते। य एतद्विद्वान्पुरुषं प्रतिगृह्णाति, सप्तममिन्द्रियस्योपाधत्ते। य एतद्विद्वान् प्रतिगृह्णाति सप्तममिन्द्रियस्योपक्रामति ॥३॥ क इदं कस्मा अदात्कामः कामायेति कामो हि दाता कामः प्रतिगृहीता कामः समुद्रमाविशदिति समुद्र इव हि कामोऽपरिमितः कामेन त्वा प्रगृह्णामि कामैतत्त इति कामेनैव प्रतिगृह्णाति कामे प्रतिष्ठापयति। नाहं वैतस्मिन्नमुष्मिंल्लोके दक्षिणामिच्छन्ति। य एवं विद्वान् दक्षिणां प्रतिगृह्णाति। यस्तं देवं वेद योऽग्रे दक्षिणा अनयत्प्रतावदाप्नोति, यावद्दक्षिणानां नेत्रं भवति ये तान्वेद येभ्यः स तदनयद्दक्षिणीयो भवति। यस्तं प्रतिगृहं वेद येन ते प्रतिगृह्णन्वसीयान्भवति प्रतिगृह्य वसीयांसि हि ते प्रतिगृह्याभवंस्ते देवाः सुरित्रा व्यत्ष्यांस्ते विदुरमतः प्रदानाद्वा इहाजगामेति ॥ न कस्मी-

नब्रुवन्नतो न यूयं प्रयच्छतेति सप्तहोतॄन् केनायतन्वेत्य-त्रैव वेत्स्यथेति सप्तहोत्रार्यमगृहपतयोन्यसीदन्सन्तनवा-मेति तेषां महाहविर्होताऽसीत्सत्यहवीरध्वर्युर्गोचित्तपाजा अग्निदचित्तमना उपवक्ता नाधृष्यश्च प्रतिधृष्यश्चाभिगरा अयास्या उद्गाता त एतं गृहमगृह्णत आयतनमैच्छंस्ते त्रय-स्त्रिंशमेवायतनमारचयंस्ते वेदं समतन्वंस्त्रयस्त्रिंशेन च हवा इदं सप्तहोत्रा च सन्ततं यदिदं देवा मनुष्या अन्योन्यस्मै प्रददाति सन्ततमस्मा अविच्छिन्नं प्रदीयते य एवं वेद ॥

अनेन मन्त्रहोमेन पितुः विष्णोः प्रथमे वा त्रयोदशे विष्णुश्राद्धे वायुरूपो यमः प्रीयतां प्रीतोस्तु ॥ इति यमकारणानि ॥ ४ ॥

ततः शनैश्चरसूक्तं पठेत् ॥

## अथ पितृकारणानि ॥ ५ ॥

आहं पितॄन्सुविदत्राँ अवित्सिनः पातं च विक्रमाणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भाजन्त पितस्त इहागमिष्ठाः ॥ यथा पितृसंख्या । अग्निष्वात्ता । ये केचि-

ङ्भुवि सन्ति पूर्वपितरो ये के च नद्यां गता ये पाताल-
निवासिनो मम कुले याताश्च ये प्रेतताम् । ये दग्धा नि-
जगोत्रजैः पितृवने दग्धाश्च ये वा स्वतः क्षेत्रेऽस्मिन्नुपया-
न्तु तेऽद्य निखिला मन्त्रक्रियावैभवात् ॥ १ ॥ ये चा-
स्मत्पितरो विषादपि मृता येऽभक्ष्यभक्ष्याद्धता येचान्ये
क्षुधितार्तिदुर्भिक्षहता ये व्याधिग्रस्ताः परे । ये चण्डाल-
पदातिसङ्करहता ये शस्त्रसम्भेदनैस्तेद्यास्मिन्नुपयान्तु कर्म-
विषये तृप्तिं परां कर्मजाम् ॥ २ ॥ ये चास्मत्पितरः सरी-
सृपहता ये चाधमश्रृङ्गिभिर्ये दंष्ट्राजलवह्निपादपशिलाचौ-
रारिदुष्टैर्हताः । येऽसत्सङ्गतिदुष्टचारचरितैर्विस्रम्भघाताच्च
ये तेऽद्यास्मिँल्लघु संलभन्तु महतीं तृप्तिं परां कर्मजाम्
॥ ३ ॥ आवाहिता मखमुखे भवदर्थमद्य नारायणादय
इमे खलु कारणेशाः । उत्तारणाय भवतो नरकात्सुघो-
रात्त्वं चैहि प्रेत गगनाकृतिशून्यरूपः ॥ ४ ॥ ॐ उदी
रतां [illegible] प्रियं [illegible] ॥ ॐ [illegible]वरा

उत्परासा उन्मध्यमाः पितरः सोम्यासः । असुं य्य ईयु-
रवृका ऋतज्ञास्ते नोऽवन्तु पितरोहवेषु ॥ इदं पितृभ्यो
नमो अस्त्वद्य ये पूर्वासो य उ परास ईयुः । ये पार्थिवे
रजस्या निषत्ताये वा नूनं सुवृजिनासु विक्षु ॥ आहन्पितॄ-
न्सुविदत्रां अवित्सिन पातं च विक्रमाणं च विष्णोः ।
बर्हिषदो ये सुधया सुतस्य भाजन्त पितस्त इहागमिष्ठाः ॥
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आगता वसाशन्त मे नाथा नः शंय्योनौरपो ददा-
तन ॥ उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रि-
येषु । त आगमन्तूत इह ब्रुवन्तु तेऽवन्त्वऽस्मान् ॥ शुच्या
जानु दक्षिणतो निषिद्येमां यज्ञमभि घृणन्तु विश्वे । मार्हिं-
सीष्ट पितरः केनचिन्नो यद्व आगः पुरुद्वा कराम ॥ आ-
सीनासो अरुणीनामुपस्थे रयिष्ठन्त दाशुषे मर्त्याय । पुत्रे-
भ्यः पितरस्तस्य वसवस्ते सोम्यासाः प्रयच्छत इहोर्जं
दधातन ॥ ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं व-

सिष्ठाः । तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाम-
मन्तु ॥ ये तातृषुर्देवत्रा जेहमाना होत्राविदस्तोमो त्व-
ष्टसो अर्कैः । अग्ने याहि सुविदत्रेभिरर्वाङ्सत्यैः काव्यैः
पितृभिर्घर्मसद्भिः ॥ ये मर्त्यासो हविरदो हविष्पा इन्द्रेण
देवैः सुरथं दधाना । अग्ने याहि सहस्रं देववन्दैः परैः
पूर्वैः पितृभिर्घर्मसद्भिः ॥ २ ॥ अग्निष्वात्ताः पितर इहा-
गच्छत सदः सदः सदत सुप्रनीतयः । अत्ता हवींषि
प्रयतानि बर्हिष्यऽथा रयिं सर्ववीरं दधातन ॥ त्वमग्ने
ईडितो जातवेदो वाड्ढव्यानि सुरभीणि कृत्वीः । प्रादः
पितृभ्यः सुधया ते अक्षन्नद्धि त्वन्देव प्रयता हवींषि ॥
ये चेह पितरो येच नेह यांश्च विद्म यां उ च न प्रविद्म ।
त्वं वेत्थयति ते जातवेदः सुधाभिर्यज्ञं सुकृतं जुषस्व ।
ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया माद-
यन्ते । तेभिः सुराळऽसुनीतीमेतां यथा वशं तन्वं कल्पय-
यस्व ॥ इति ऋग्वेदे ॥

श्राद्धब्राह्मणम् ॥ ॥ श्रद्धया श्राद्धकामायनी श्राद्धमानुष्टु-भन्तु ॥ श्रद्धयाग्निः समिद्ध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः । प्रियं भोजेषु यज्वस्व स्विदते मुदितं कृधि ॥ यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु यज्वसु, अस्माकं मुदितं कृधि ॥ श्रद्धां देवा यजमाना वायुगोपा उपासते । श्रद्धां हृदय्ययाऽकूत्या श्रद्धया विन्दते वसु ॥ श्रद्धां प्रातर्हवामहे श्रद्धां मध्य-न्दिनं परि । श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ यजुः ॥ पितुर्नुन्नस्तुतिर्गायत्रंत्वाद्योष्णिगनुष्टुब्गर्भा तृतीया पञ्च-म्याद्याश्चतुस्रोऽनुष्टुबोन्त्या बृहती च ॥ ॥ पितुर्नु स्तोषं महो धर्मानन्तर्विषीं यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् । स्वादो पितो मधोपितो वयन्त्वा ववृधीमहे अस्माकम-विता भव ॥ उप नः पितवाचरः शिवः शिवेभिरूतिभिः । मयोभुरद्विषेण्यः सखा सुशेवो अद्वयः ॥ तव ते पितरो

रसा रजांस्यनु विष्ठिता दिवि वाता इव श्रिताः ॥ तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो प्रस्वाद्मानो रसानां तु विग्रीवा इवेरते । त्वे पितो महानां देवानां मनोहितम् । अकारि चारु केतुना तवाहिमावसावधीत् । यदद: पितो अजगन्विवस्व पर्वतानाम् । अत्राचिन्नो मधो पितो रं भक्ष्याय गम्याः ॥ यदपामोषधीनाम्परि शंसा रिषामहे, वाता पेपीव यद्भवं ॥ करम्भओषधी भव पीवो वृक्क उदारथिः । वाता पेपीव यद्भवं ॥ यत्ते सोम गवाशिरो यवाशिरो भजामहे, वाता पेपीव यद्भवं ॥ तन्त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम । देवेभ्यस्त्वा सदमादमस्मभ्यं त्वा सदमादम् ॥ १ ॥ सोमाय पितृमत इति तूस्वानाम् ॥ सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालः पुरोळाशः पितृभ्यो अग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय मन्था,एतत्ते तत येचत्वाऽनु, एतत्ते पितामह येचत्वाऽनु, एतत्ते प्रपितामह येचत्वाऽनु, अत्र

पितरोमादयध्वम् । स्वसन्दृशन्त्वा वयं मघवन्सन्दिषीमहि प्रनूनं पूर्णबन्धुरः स्तुतो यामि वशामनु यो जान्विन्द्र ते हविः । परेत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिर्दत्वा यास्मभ्यं द्रविणेहि भद्रं रयिं चनः सर्ववीरं नियच्छत अमी मदन्तु पितरः ॥ अयाविष्ठा जनयन्कर्वराणि, सहि घृणिरुर्वरायुगातुः । सम्प्रत्युदैद्धरुणं मध्वो अग्रं, स्वायन्तनू तनुमैरयन्त अक्षन्नमी मदन्त ह्यव प्रिया अतषत अस्तोषत सुर्भानवो विप्रा न विष्टया मती, यो जान्विद्र ते हरी ॥ नमो वः पितरो मन्यवे, नमो वः पितरः शुष्माय, नमो वः पितरो जीवाय, नमो वः पितरो रसाय, नमो वः पितरोऽक्रूराय, नमो वः पितरो बलाय, नमो वः पितरः स्वधा वः, पितरो याऽत्र पितरः स्वधा, यत्र यूयं स्थ सा युष्मासु तया यूयं, यथाभागं मादयध्वं, येह पितर ऊर्क् यत्र वयं स्म, सा अस्मासु तस्यै वयं ज्योक्जीवन्तो भूयास्म ॥ ॥ मनोन्वा

हवामहे नाराशंसेन स्तोमेन पितॄणां च मन्मभिः । आन एतु मनः पुनः क्रत्वो दक्षाय जीवसे ज्योक्‌ सूर्यन्दृशे । पुनर्नः पितरो मनो ददातु दैव्यो जनः जीवान्व्रातां सचेमहि । आते अग्न इधीमहि धीमन्तं देवजनम् । यद्धस्याति पनीयते समिदीदयति द्यवि इषं स्तोत्रभ्य आभर ॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चक्रम यानि दुष्कृता ॥ ॐ उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशन्त आवह पितॄन्ह विषे अत्तवे ॥ त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठ मननेष पन्थाम् । तव प्रणीते पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ त्वया हि नः पितरः सोमाः पूर्वे कर्माणि चक्रुः पावमान धीराः । वन्वनु वातः परिधीरोपर्णुर्वीरेभिरश्वैर्मघवा भवा नः ॥ त्वं सोम पितृभिः संविदानोऽनुद्यावापृथिवी आततन्त । तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आगता वसाशन्त मे नाथा नः शंय्योर्नोरापो ददात न ॥ आहन्पितॄन्सुविदत्राँअवित्सि नः पातं च विक्रमणं च विष्णोः । बर्हिषदो ये सुधया सुतस्य भाजन्त पितस्त इहागमिष्ठाः ॥ उपहूतः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आगमन्तु त इह श्रुवन्त्वधिब्रुवन्तोऽवन्त्वऽस्मान् ॥ अग्निष्वात्ताः पितर इहागच्छन्तु सदः सदः सदतः सुप्रणीतयः । अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं ददातन ॥ अग्निष्वात्ता ऋतावृधः पितरो मृळतास्व नः । प्रमुञ्चन्तु नो अंहसः ॥ अग्निष्वात्ताऽनृतमती हवामहे नराशंसं, सोमपीथं ये आनशुः । ता आगमन्त त इह श्रुवन्त्वधिब्रुवन्तो तेऽवन्त्वऽस्मान् ॥ स पूर्वया निविदा कव्यता योरिमाः प्रजा अजयन्मनूनाम् । विवस्वता चक्षसाद्यामऽपश्च देवा अग्निं धारयन्द्रविणोदाः ॥ यो अग्निः कव्यवाहनः पितन्यक्षदृता वृधा । सेदु

हव्यानि वोचते देवेभ्यश्च पितृभ्य आ ॥ त्वदग्ने काव्या त्वन्मनीषा त्वदुक्था जायन्ते राध्यानि त्वदेति द्रविणम् । वीरपेशा इत्था धिये दाशुषे मर्त्याय, वायुरग्रेगा अया-भिर्यासि ॥ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा इन्द्राय सुम्नया ॥ शुनं हुवे मघवानमिन्द्रामस्मि-न्भरेनृमं वाजसातौ । शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि । सञ्जितं धनानाम् ॥ उदुत्यं, चित्रन्देवानाम् । इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे, इह देवं सुराद-सम् ॥ इन्द्रं वयं धनपतिं सूनुमन्वारभामहे । स नः पितेव पुत्रेभ्य ईशानः शर्म यच्छतु ॥ इति पितृसूक्तम् ॥

"अथ यजुर्वेदे ॥" असुराणां वा इमे लोका आसंस्ते देवानब्रुवन् । यो वै यं लोकमुज्जिष्यति स तस्मै भविष्य-तीति, ते वसव इमं लोकमजयन्नऽन्तरिक्षं रुद्रा दिव-मादित्यास्ते वसव इमं लोकं जित्वाऽन्तरिक्षं परापतंस्ते रुद्रानब्रुवन् यन्नो जयेम तन्नः सहासदिति, ते वसवो

रुद्राश्चान्तरिक्षं जित्वा दिवं परापतंस्त आदित्यानब्रुव-न्यन्नो जयेम तन्नः सहासदिति ते वसवो रुद्राश्चादित्या-श्चामुं लोकं जित्वेमानेव लोकानसुरानभ्यभवंस्ततो देवा अभवन् पराऽसुरा अभवन्वसवः पितरो, रुद्राः पितामहा, आदित्याः प्रपितामहास्तस्मादाहुर्देवाः पितरः पितरो देवा इति ये वै देवानां सोमपाः पितरस्तानुदपात्रैस्तर्पयन्ति त-स्मात्त्रिरेकस्यापः प्रदीयन्ते द्विरेकस्य सकृदेकस्य, तत्षट् सम्पद्यते यथाजितमेवोपलभन्ते यदनन्तमुदकं सम्पिबन्ति तत्सप्तमं यदुभयतो मूलैस्तिलमिश्रं तदष्टमं यत्पात्र्या पिण्ड परिषेकस्तन्नवमं यदुदकुम्भं दक्षिणां प्रोक्षन्ति तद्दशमं तेन दशोदकं श्राद्धमुच्यते, तद्दश दशाक्षरा विराळन्नं विरा-ड्विराज्ये वाऽन्नाद्ये प्रतितिष्ठति ॥ १ ॥ पितरो वै पुत्रं जायमानमन्वायन्नस्माकं श्राद्धं कुर्यादिति, सोब्रवीत्कदाऽहं श्राद्धं करवाणीति तेऽब्रुवन्हस्तिच्छायायां श्राद्धं दद्याद्यः कामयेत न पुनर्दद्यादिति हस्ती वै भूत्वा सर्वानस्मा-

दित्यं छाययाऽभ्यभवत्तद्देवपितर आप्याययन्नेतद्वै देवपितृणामायतनं यद्धस्तिच्छायायां तस्माद्धस्तिछायायां श्राद्धं दद्याद्यः कामयेताऽक्षय्यमऽपरिमितमऽनन्तं भूयः स्यादित्यक्षय्यमेवाऽपरिमितमऽनन्तं भूयो भवति, य एवं विद्वान्हस्तिच्छायायां श्राद्धं ददाति पितृणामक्षय्यत्वाय ॥ २ ॥ द्वौ वै पन्थानौ देवयानश्च पितृयानश्चाग्निहोत्रेण वै देवाः स्वर्गं लोकमायन्पितृयज्ञेन पितृलोकं तस्मादुभौ यष्टव्यौ देवयानश्च पितृयानश्चोभाभ्यां वा इतः स्वर्गं लोकमित्याहुरन्यस्मिंल्लोके समिधा प्रत्यतिष्ठन्नन्नाद्यश्च ब्रह्मणेभ्योपासरंस्तेभ्योऽब्रवन्नग्नौ कुर्मोऽग्नौ करिष्याम्यग्नौ करवाणीति, तेऽब्रुवन्कुरुत, कुरुष्व क्रियतामिति यं कामयेत प्रजावान्स्यादिति तस्य यज्ञे कुरुतेति ब्रूयाद्यं कामयेत पशुमान्स्यादिति तस्य यज्ञे कुरुष्वेति ब्रूयाद्यं कामयेत वसीयान्स्यादिति तस्य यज्ञे क्रियतामिति ब्रूयादग्नीषोमीयं वा एतद्दनिर्यदग्नौ करणमग्नीषोमीयेनैव तद्धव्ये-

नास्मिल्लोके यजमानो वसीयान्भवति ॥ ३ ॥ मनो वा एष युङ्क्ते यो यक्ष्यमानो युंक्ते सहि मनसा यज्ञस्तायते स यज्ञो भवत्यथ श्रद्दत्ते श्रद्दधानं वै पितरोऽन्वायंति वृद्धिं श्रुत्वा यद्वृद्धिश्राद्धं कुर्वन्ति तेनास्य ते पितरोऽभीष्टाः प्रीता भवन्तीन्द्रो वै प्रजाकामः पितृयज्ञेनाऽयजत्तस्यासुरा यज्ञमजिघांसंस्तान्विश्वदेवा उपघ्नन्यद्वैश्वदेवं पुरस्तात्कुर्वन्त्यसुराणामपहत्यै प्राचीनं प्रवणेन देयं प्राचीनप्रवणो वै वज्रो वज्रेणैव यज्ञाद्रक्षांस्यपहन्ति दक्षिणाग्राश्चोदगग्राश्च दर्भा भवन्ति दक्षिणाग्रेभिर्वाऽस्य पितरः समुपसरन्त्युदगग्रेभिर्देवास्तस्माद्ब्राह्मणेभ्य आवृता दर्भाः प्रदीयन्ते पितॄणामुपसरत्वायैवमस्य पितरः समुपसरन्त्यन्तर्हिता ह्यमुष्मादादित्यात्पितरोरथेऽन्तर्हिता हि देवेभ्यश्च मानुष्येभ्यश्च पितरः, उपमूलं बर्हिर्ददाति तेन पितॄणां यद्दतमूलं तेन देवानामुभये हीज्यन्तेऽन्तर्हिता हि वीक्ष्यया मानुष्यस्यैवमिव हि तेऽन्तर्हिता भवन्ति । इति श्राद्धब्राह्मणम् ॥ अनेन०

पितुर्विष्णोः प्रथमे द्वितीये त्रयोदशे विष्णुश्राद्धे आकाशरूपाः पितरः प्रीयन्तां प्रीताः सन्तु ॥ इति पितृसूक्तम् ॥

---

## ॥ अथ इषे त्वोर्जे त्वा ब्राह्मणम् ॥

'इषे त्वोर्जे'तीषमेवोर्जं यज्ञो दधाति "वायवःस्थ" इति वायवा अन्तरिक्षस्याऽध्यक्षोऽन्तरिक्षादेव वायव्याः पशवो वायुरेवैनानऽन्तरिक्षाय परिदधाति प्रायएनानेतत्करोति यद्वा वायवःस्थेत्याहारण्यस्येव हि वायु "सपायवस्थेऽति" यजमानायैव पशूनुपाकरोति "देवोवः सविता प्रार्पयत्वि"ति प्रसूत्यै "श्रेष्ठतमाय कर्मणे" इति यज्ञो वै श्रेष्ठतमं कर्म "आप्यायध्वमघ्न्या देवभाग"मिति वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुनराप्यायन्ते ध्यै तर्हिं देवेभ्य एवैना आप्याययन्ति "प्रजावतीरनमीवा आयक्ष्मा" करोति "मा वः स्तेन ईशत माघशंस" इत्याशिषमेवाशास्ते "परि वो रुद्रस्य हेतिर्वृणक्त्विति" रुद्रमेवमभि परि वृणुक्तु घा-

तकोस्य रुद्रः पशून्भवति । यस्यैवं विदुषो यस्यैवं विद्वान्हविषे प्रार्पः प्रार्पयति "ध्रुवा अस्मिन् गोपतौ स्यातेति" दृंहत्येवैना "बह्वीरिति" भूयानमेवैना गमयति "यजमानस्य" पशून्पाहि । "पशुपा असी"ति पशूनां गोपीथाय प्रतीचीं शाखामुपगूहति तस्माद्ग्राम्याः पशवः सायमारण्याद्ग्राममुपयन्ति यत्पराचीमुपगुहेदरण्ये हीयेरन् ।। इति इषे त्वोर्जे त्वा ब्राह्मणम् ।।

## अथ स्वाध्यायब्राह्मणम् ।।

स ह वै देवानां चासुराणां च यज्ञो प्रतता आस्तां, वयं स्वर्गं लोकमेष्यामो वयमेष्याम इति। ते सुरा सन्नह्योवै सहसाऽचरन् ब्रह्मचर्येण तपसैव देवास्तेऽसुरा अमुह्यंस्ते न प्रजानंस्ते पराभवन्प्रस्तुतेनैव यज्ञेन देवाः स्वर्गं लोकमायन्नप्रस्तुतेनाऽसुराः पराभवन् प्रस्तुतो वै यज्ञ उपवीतिनोऽप्रस्तुतेनोपवीतिनो यद्वै किञ्चिद्ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तस्माद्ब्राह्मणो यज्ञोपवीत्यधीयीत

यजेत याजयेद्वा दद्यात्प्रतिगृह्णीयाद्यज्ञस्य प्रसृत्याऽजिनं वासो वा दक्षिणत उपवीय दक्षिणं पाणिमुद्धरत्यवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं पितृदैवत्यं संवीतं मानुष्यं निवीतमासुरम् ॥ १ ॥ अजान् ह वै पृश्नीस्तपस्यमाना ब्रह्म स्वयं लभ्यानर्ष त ऋषयोऽभवंस्तदृषीणामृषित्वं तान्देवा उपातिष्ठन्त यज्ञकामास्तेभ्य एतद्ब्रह्मयज्ञमपश्यन् स्वाध्यायं तेनायाजन्त यदृचोऽध्यगीषत ताः पयआहुतयो देवानामभवन् यद्यजूंषि ता घृताहुतयो यत्सामानि ताः सोमाहुतयो यदथर्वाङ्गिरसस्ता मध्वाहुतयो यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीस्ता मेदआहुतयो देवानामभवन्, ताभिः क्षुधां पाप्मानमपाघ्नताऽपहतपाप्मानो देवाः स्वर्गं लोकमायन्ब्रह्मणः सायुज्यमृषयोऽगच्छन्क्षुधामेव पाप्मानमपहत्य स्वर्गं लोकमेत्य ब्रह्मणः सायुज्यं गच्छति य एवं विद्वान्स्वाध्यायमधीते ॥ २ ॥ पञ्च वा एते यज्ञाः सतति

ग्रतायन्ते सदधिसन्तिष्ठन्ति देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञश्चेति यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः सन्तिष्ठते। यत्पितृभ्यः स्वधाकारैस्तर्प्याऽपः तत्पितृयज्ञः सन्तिष्ठति। यद्भूतेभ्यो बलिं हरति तद्भूतयज्ञः सन्तिष्ठति। यत् ब्राह्मणेभ्योऽतिथिभ्योप्यऽन्नाद्यमुपहरति तन्मनुष्ययज्ञः सन्तिष्ठति। यत्स्वाध्यायमधीत एकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः सन्तिष्ठति॥ २॥ यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा अभिवहन्ति यद्यजूंषि घृतकुल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कुल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीर्मेदसः कुल्या अस्य पितॄन्स्वधा अभिवहन्ति। यदृचोधीते पय आहुतिभिरेव देवांस्तर्पयति यद्यजूंषि घृताहुतिभिः यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीर्मेदआहुतिभिरेव देवांस्तर्पयति एन

तृप्ताः प्रीतास्तेजसा वर्चसा द्रविणेन चान्नाद्येन तर्पयन्ति ॥ ४ ॥ ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादागच्छन्दिश उदीच्याः प्रागुदीच्यां वोदित आदित्यो दक्षिणत उपवीयोपविश्य त्रिरापआचामेद्द्विः परिमृजेद्दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीतापां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव ब्रह्म कुरुते दक्षिणोत्तरौ पाणी कृत्वा सपवित्र ओमिति प्रतिपद्यते एतद्वैतद्यजुस्त्रयीविद्यां प्रत्येषा वागेतत्परममऽक्षरं तदेतदृचाभ्युक्तम् "ऋचोअक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते" इति त्रयमेव प्रयुक्त्वाथासीत सावित्रीं गायत्रीं त्रिरन्वाह, पच्छोऽर्धर्चशोऽननवानं सविता श्रियः प्रसविता श्रियमेवाप्नोतीत्यथो प्रज्ञातयैव प्रतिपदाच्छन्दांसि प्रतिपद्यते ॥ ५ ॥ तस्य वा एतस्य यज्ञस्य मेघा हविर्दानं वर्षं हविर्विद्युदग्निः स्तनयित्नुर्वषट्कारो यदवस्फूर्जति सोनु वषट्कारो वायुरात्माऽमावस्यां स्विष्ट-

कुद्य एवं विद्वान्मेघो वर्षति विद्योतमाने स्तनयत्यवस्फू-
र्जति पावमाने वाया अमावस्यायां स्वाध्यायमधीते उत्तमं
नाकं रोहति उत्तमः समानानां भवति यावद्वा इमां
पृथिवीं वित्तस्य पूर्णां ददत्स्वर्गं लोकं जयति त्रिस्तावन्तं
जयति भूयांसं चाक्षय्यमपः पुनर्मृत्युञ्जयति यएवं वि-
द्वान्स्वाध्यायमधीते ॥ ६ ॥ तस्य वा एतस्य यज्ञस्य द्वा
अनध्यायौ यदात्माऽशुचिर्यद्देशो य एवं विद्वान्महारात्र
उपस्युदित आसीनस्तिष्ठन् व्रजञ्छयानोऽरण्ये ग्रामे वा
यावत्तरसं स्वाध्यायमधीते सर्वाँल्लोकानभिजयति सर्वाँल्लो-
कानऽनृणोऽनुसञ्चरति तदेषाऽभ्यनूक्ता "अनृणा अस्मिन्न-
नृणाः परस्मिंस्तृतीये लोके अनृणाः स्याम । ये देवयानाः
पितृयानाश्च लोकाः सर्वाँल्लोकाननृणाः सञ्चरेम" इत्यग्निं
वै सृष्टं पाप्माऽपजग्राह तस्य प्रजापतिराहुतिभिः पाप्मा-
नमपहताहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्रा-
ह्मणेन ब्राह्मणस्य छन्दोभिः

पाप्मा स्वाध्यायो देवपवित्रं वा एतद्विस्तं यो विसृ-जत्यभागो वाचि भवत्यऽभागो नाके । तदेषाऽभ्यनूक्ता "यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलीकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्" इति तस्मात्स्वाध्यायोऽध्येतव्यो यंयं क्रतुमधीते तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति तदेषाऽभ्यनूक्ता "ये अर्वाञ्च उत वा पुराणा वेदं विद्वांसो अभितो वदन्ति । आदित्यमेव ते परिविशन्ति सर्वेऽग्निं द्वितीयं त्रिवृतं च हंस"मिति यावतीर्वै सर्वा देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति, तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिने दिने नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति । मध्यंदिने प्रबलमधीयीताग्निर्वै ब्राह्मणोऽग्ना आदित्योग्निस्तस्मादेष तेजिष्ठं तपति तदेषाऽभ्यनूक्ता "चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जग-

तस्तस्थुषश्चेति" स वा एष ब्रह्मयज्ञः सद्यः प्रतायते सद्यः सन्तिष्ठते तस्य प्राक् सायमवभृथो "नमो ब्रह्मण" इति परिधानीयां त्रिरन्वाहाऽप उपस्पृश्य गृहान्परीत्य तत्र यत्किंचिद्ददाति तद्दक्षिणाद्वहे ह वा एष छन्दांसि यो याजयति स येन यज्ञ क्रतुना याजयेत्तमरण्यं परेत्य शुचौ भूम्यवकाशे ग्रामादिशुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत तथाहास्य पुनराप्याययन्ते दीक्षामुपैति दीक्षितो वा एष भवति यः स्वाध्यायमधीते तस्यानशनन्दीक्षास्थानमुपसद आसीनं सत्या वाग्जुहूर्मन उपभृत्प्राणो हविः सवा एष ब्रह्मयज्ञः प्राणं दक्षिणः सद्यः समृद्धतमो भवति ग्रामेण मनसा स्वाध्यायमधीते दिवानक्तं वेति ह स्माह शौच आग्नेयमुतारण्ये बलवदुत वानो उत्तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीत वै स्वाध्यायमानखाद्वा एष तपस्तप्यते यः स्वाध्यायमधीते तपस्वी पुण्यो भवति । तदेषाभ्यनूक्ता ॥ ९ ॥ "नमो ब्रह्मणे नमो अस्त्वग्नये

नमः पृथिव्यै नम ओषधीभ्यो नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि । इत्येतासामेव देवतानां सार्ष्टितां सायुज्यं सलोकतां सामीप्यमाप्नोति य एवं विद्वान्स्वाध्यायमधीते ॥ इति स्वाध्यायब्राह्मणम् ॥

## अथ प्रतिग्रहब्राह्मणम् ॥

ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां प्रतिगृह्णामि, वरुणस्त्वा नयतु देवि दक्षिणे यमायाशु, तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे, देवस्य त्वा सवितुः० प्रतिगृह्णामि, वरुणस्त्वा नयतु देवि दक्षिणेऽग्नये हिरण्यं तेनाऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे, देवस्य त्वा सवितुः० प्रतिगृह्णाम्यऽग्निस्त्वाकृन्तन्नपसोतन्वत वरुत्रीरवयन् वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे, देवस्य त्वा सवितुः० उत्तानायाङ्गिरसाय प्राणं तेनामृतत्वमशीय वयो दात्रे भूया-

न्मयो मह्यं प्रतिगृहीत्रे, देवस्य त्वा सवितुः० प्रजापतये पुरुषं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे, क इदं कस्मा अदात्कामः कामाय कामो दाता कामः प्रतिगृहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते अस्तु। इति प्रतिग्रहब्राह्मणम् ॥

## अथ सन्ध्याब्राह्मणम् ॥

ॐ रक्षांसि ह वा पुरोऽनुवाके तपोग्रमतिष्ठन्त तानि-प्रजापतिर्वरेण्योपामन्त्रयत। तानि वरमऽवृणीताऽदित्यो नो योद्धेति, तानि प्रजापतिरब्रवीद्योधयध्वमिति, तस्मादुत्तिष्ठन्तं ह वा तानि रक्षांसि आदित्यं योधयन्ति यावदस्तमन्वागात्तानि ह वा एतानि रक्षांसि गायत्र्याऽभिमन्त्रितेनाम्भसा शाम्यन्ति ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति, ता एता आपो वज्रो भूत्वा तानि रक्षांसि मर्दितान्यऽरुणे द्वीपे प्रक्षिपन्ति, ...

तेन पाप्मानमवधून्वन्त्युद्यन्तमस्तयन्तमादित्यमभिधाय कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद ॥ इति सन्ध्याब्राह्मणम् ॥

## अथ पावमान्यब्राह्मणम् ॥

उपस्थानम् ॥ ॐ त्वं सोमासि द्वात्रिंशद्भारद्वाजः कश्यपो गोतमोत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इतीह त्र्यृचा सप्तर्षयः शेषं पवित्रो वसिष्ठो भौवितारः तिस्रः पापाण्यो यत्ते पवित्रमग्नेयी सावित्र्यग्निः सावित्री वैश्वदेवी पवस्व सोमेति षोडशाक्षरास्तिस्रो द्विपदास्त्रिशी पुरा उष्णिक् सप्तविंशत्यानुष्टुबन्ते च ते पावमान्यधेत्यस्तु ते जगती ॥ उपस्थाने विनियोगः ॥ ॐ त्वं सोमासि धारयुर्मन्त्र ओजिष्ठो अध्वरे । पवो समं हयद्रविः ॥ त्वं सदो नृपादने दधन्वात्सतसरिन्तमः । इन्द्राय सूरिरन्धसा ॥ त्वं सुष्वाणो आद्रिभिरभ्यो कर्षकनिक्रदत् । द्युमन्तं शुष्मम्नुत्तमम् ॥ इन्दुं हिन्वनि आर्षति तिरो वाराण्यव्यया । हरिर्वाजमऽचिक्रदत् ॥ इन्दो व्यवमर्षसि

विश्रवासि विसौभगाः । विवाजान्सोमगो मतः ॥ १ ॥
आन इन्दो शतग्विनं रयिङ्गोमन्तमश्विनम् । भिरासोम-
सहस्रिणम् ॥ पावमानः स इन्दव स्थिरः पवित्रमाशवः ।
इन्द्रं यासेभिराशत ॥ ककुहः सोम्यो रस इन्द्ररिन्द्राय
पूर्व्याः । आयुः पवत आयवे ॥ हिन्वन्ति सूर सुस्रयः
पवमानः मधुश्च्युतम् । अभिगिरा समस्वरन् ॥ अविता नो
अजाश्वः पूषा यामनि वासनि । आभक्षत्कन्यासु नः ॥२॥
अयं सोम कपर्दिनो घृतन्नः पवते शुचि । आ भक्षन्
कन्यासु नः ॥ वाचो जन्तुः कवीनां पवस्व सोम धारय ।
देवेषु रत्नधा असि ॥ आकलयेषु धावति श्येनो वर्म वि-
गाहते । अभिद्रोणा कनिक्रदत् ॥ परि प्रसोमतेरसौरस-
लिकलशो सुतः । श्येनो न उक्तो आर्षति ॥ ३ ॥ पवस्व
सोम मन्दयन्निन्द्राय मधुमत्तमः । अस्तग्रन्देववीतये ॥
वाजयन्तो रथा इव ते सुतासो मदिन्तमा । शुक्रावायु-
मस्टक्षत ॥ग्राव्णा तन्नो अभिष्टुतः पवित्रं सोम गच्छसि ।

दधस्तोत्रे सुवीर्यम् ॥ एष तन्नो अभिष्टुतः पवित्रमति-गाहने । रक्षोहावारमव्ययम् ॥ ४ ॥ यदऽन्ते यच्च दूरके भयं विन्दति मामिह । पावमानं वितज्ज्ञहि ॥ पावमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पूतः स पुनातु मा ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरः । ब्रह्म तेन पुनीहि नः ॥ यत्ते पवित्रमग्निवद्ग्ने तेन पुनीहि नः । ब्रह्म स वै पुनीहि मा ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ५ ॥ "इत्युपस्थाने" ॥ अथ तर्पणम् ॥ अस्य पावमानीसूक्तस्य गायत्रीच्छन्दः सप्त-र्षयो देवता तर्पणे विनियोगः । ॐत्रिभिष्ट्वन्देव सवितर्वर्सिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि मा ॥ "अनुष्टुप्च्छ-न्दः" ॥ पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥ "द्वे गायत्रीच्छ-न्दः" ॥ प्राप्यायस्व प्रस्यन्दस्व सोम विश्वेभिरंशुभिः । देवे-भ्य उत्तमं हविः ॥ उपप्रियं पनिप्नतं युवानमाहुतीवृधम् ।

अगर्भ विद्गुतो नमः "उष्णिक्च्छन्दः" ॥ अलाय्यस्य परशुना शतमा पर्वसु देवसोम । आखुश्चिदेव सोम ॥ "द्वे आनुष्टुप्छन्दः" ॥ यः पावमानीरध्येत्यृषिभिः संभृतं रसम् । सर्वं स पूतमश्नाति सुदितं मातरिश्वना ॥ पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ सप्तर्षयो वसिष्ठ ऋषिर्वाऽनुष्टुप्छन्दः त्रिष्टुप् वा देवाः सोमो देवता पाठे तर्पणे वा विनियोगः ॥ ॥ पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्च्युतः । ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ पावमानीर्दिशन्तु न इमं लोकमथो अमुम् । कामान्समवयन्तु नो देवैर्देवीः समाहृताः ॥ येन देवाः पवित्रेणाऽत्मानं पुनते सदा । तेन सहस्रधारेण पावमानः पुनातु मा ॥ प्राजापत्यं पवित्रं शतद्योतं हिरण्ययम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥ इन्द्रः सुनीत्या सहस्रा पुनातु सोमः स्वस्त्या । वरुणः समीच्या ॥

यमो राजा प्रसूणाभिः पुनातु जातवेदा, ऊर्जयन्त्या पुनातु मा ॥ ऋषयस्तु तदपस्तापे सर्वे सर्वजिगीषवः । तपसस्तपसोऽध्यायन्तु पावमानी ऋचोदब्रवीत् ॥ यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किञ्चिदन्यत् । जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥ मातापित्रोर्यन्न कृतं वचो मे यत्स्थावरं जङ्गममावभूव । विश्वस्य तत्प्रहरिषितं वचो मे तत्पावमानीभिरहं पुनामि ॥ गोघ्नात्तुष्कराद्वा स्त्रीवधाद्यत्किल्बिषम् । पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ॥ ब्रह्मवधात्सुरापानात्सुवर्णस्तेयाद्वृषलिगमनमैथुनसङ्गमात् ॥ गुरोर्दाराभिगमनाच्च तत्पावमानीभिरहं पुनामि ॥ बालघ्नान्मातृपित्रोर्वधाद्भूमितस्करात्सर्ववर्णगमनमैथुनसङ्गमात्पापेभ्यश्च प्रतिग्रहात् । सद्यः प्रहरन्ति सर्वदुष्कृतं तत्पावमानीभिरहं पुनामि ॥ क्रयविक्रयाद्योनिदोषाद्भक्ष्याद्भोज्यात्परिग्रहात् । असम्भोजनाच्चापि नृशंसं तत्पावमा-

नीभिरहं पुनामि ॥ दुरिष्टं दुरधीतं पापं यच्चाज्ञानतः कृतम् । अयाचिताच्चासंयाज्यात्तत्पावमानीभिरहं पुनामि ॥ ऋतस्य योनयोऽमृतस्य धाम विश्वादेवेभ्यः पुण्यगन्धास्ता न आपः प्रहरन्ति पापम् । शुद्धा गच्छामि सुकृतां लोके तत्पावमानीभिरहं पुनामि ॥ पावमानीः स्वस्त्ययनीर्याभिर्गच्छति नन्दनम् । पुण्यांश्च भक्ष्यान्भक्षयत्यमृतत्वं च गच्छति ॥ पावमान्यं परं ब्रह्म शुक्रं ज्योतिः सनातनम् ॥ पितॄंस्तस्योपतिष्ठन्ति क्षीरं सर्पिर्मधूदकम् ॥ पावमानीः पितॄन्देवान्ध्यायेद्यश्च सरस्वतीम् । पितॄंस्तस्योपतिष्ठेत्तु क्षीरं सर्पिर्मधूदकम् ॥ अनेन० अक्षय्यतृप्तिरस्तु पावमानीमन्त्राः प्रीताः सन्तु ॥

## अथ मलिम्लुचब्राह्मणम् ॥

ॐ उद्वयन्तमसस्परि० ॥ १ ॥ उदुत्यञ्जातवेदसं० ॥ २ ॥ चित्रन्देवानां० ॥ ३ ॥ तच्चक्षुर्देव० ॥ ४ ॥ हंसः शुचिषत्० ॥ ५ ॥ स्योनोदिवस्पातु वातो अन्तरिक्षात् ।

अग्निर्नः पार्थिवेभ्यः ॥ ध्यानं ॥ सव्ये खड्गाक्षसूत्रा सकलशनलिनी जाह्नवी कूर्मवाहा वामे पाशाङ्कुशाङ्का मकररथगता सूर्यजा कुम्भहस्ता । धर्माधर्मौ च पार्श्वेऽरुणरथशशिनौ चक्षुषी द्वे च यस्य सोऽयं मार्तण्डनाथो हरतु च दुरितं भर्गरूपं नमामि ॥

ॐ साध्या ह वै नाम ऋषयः प्रजापतिमपृच्छन् किं वाऽयमग्निः सम्भवति किमिष्ट्वा किं यजेत को नु प्रीणाति, तान्प्रजापतिरब्रवीत् यत् षड्तून् यजेत् द्वादश पौर्णमासीरिष्ट्वा दक्षिणाग्निः प्रीणाति तेन स्वर्गं लोकं गमयति, यद्द्वादश ऋतून्यजेत चतुर्विंशतिपौर्णमासीरिष्ट्वाऽहवनीयः प्रीणाति तेनामृतत्वं गच्छति, यत् षोडश ऋतून्यजेत द्वात्रिंशत्पौर्णमासीरिष्ट्वा गार्हपत्यः प्रीणाति तेन त्रयोदशो मासः सम्पद्यते तेन पितरः प्रीणन्ति । तस्मात्त्रयोदशमासः संवत्सरः संवत्सरस्यास्थै त्रिषवनं नेत्रं भवति त्रय इमे लोका एष्वेव लोकेषु ऋध्नुवन्ति ॥ इति मलिम्लुचब्राह्मणम् ॥

## अथ मार्तण्डब्राह्मणम् ॥

ध्यानं ॥ भास्वत्पुञ्जकरं प्रसन्नवदनं पीताम्बरालङ्कृतं पद्मं चाभयपुस्तकौ जपवटीं हस्तैर्दधानं विभुम् । संवर्ताग्निसमानकान्तिममलं नेत्रत्रयोद्भासितं देवीभिः परिवारितं च वरदं मार्तण्डनाथं स्तुमः ॥१॥ यावच्चाका वहति च नदी लोदरीतोयपूर्णा यावन्नागौ विमलकमलौ तिष्ठतो मत्स्ययुक्तौ यावद्भास्वांस्तपति गगने नित्यशः कालशक्त्या तावत्स्वर्गे वसति सततं श्राद्धकृत्सूर्यक्षेत्रे ॥ २ ॥ ॐब्रह्मणः प्रजापतिः मृतो वा सजीवो भव द्वादशादित्यास्त्रयोदश मासाः ॐ भूर्भुवःस्वः, तस्मात्कश्यपः संवत्सरः पितृयज्ञश्चेति, ऋग्यजुःसामाऽथर्वाणामार्षम् ॥ ॐतद्ब्रह्मणोऽयमृषिपुत्रः कश्यपस्तेयं या भार्या सा दक्षकन्या अदितया तामुभयोर्याच्यन्ते । तत्किं ब्रह्मा किं विष्णुः किं रुद्रः किमेता दारेतानामावाहयामीदं पृच्छामि त्वाऽयं ब्रह्मा या मेतानां वाचः परमं वेद यं वेदि वदन्ति ॥ १ ॥ यां ब्रह्माण्डमाग्नेयां

परमां गायत्रीं सामवेदैश्चतुर्णामुच्चारयन्ति ॥ ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयादों २ तमुद्धरन्ति । तरणिर्विश्वे तन्दर्शन्यत्कश्यपस्य स जातम् । विश्वमाभासि रोचनम् । तस्मात्त्रयोदशो आण्डो वाऽण्डजैरदितया तद्द्वादशाण्डानामारात्रयः स आण्डो वा अण्डजः सः सतीनां सरेति प्रविश्यत । तथैतानां संवत्सरस्येतद्द्वादशादित्यानां द्वादश राशिभिः षड्तवो षड्तवस्ततः सम्पद्यते ॥ २ ॥ सरार्णवो जलार्णवस्तत्कश्यपस्यार्थिनां धातुमेतं निवारयेत् एतानाऽवाहयामीति तत्सरार्णवो जलार्णवद्यन्मही तत्पृथिव्यामादिते तस्यार्थिनो ददाति तन्महीयं कश्यपोऽयं मृताण्डोऽयं दर्शयन् स सनिनिर्जीवस्य तस्येतस्य तत्प्रसादये तस्य तज्जीवातवे जीवनस्य या असौ । देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेषामयमायुषाऽयुष्मानस्त्वसौ ॥ ॥ ब्रह्माऽयुष्मत्तद्ब्राह्मणैरायुष्मंस्तस्यायमायुषायुष्मानस्त्वसौ ॥ अग्निरायुष्मान्स वन-

स्पतिभिरायुष्मांस्तस्यायमायु० ॥ यज्ञ आयुष्मान्स दक्षि-
णाभिरायुष्मांस्तस्या० ॥ सोम आयुष्मान्स ओषधिभिरायु-
ष्मांस्त० । ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्ता-
सामय० ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण
संशिशाधि । मातेवाऽस्मा अदिते शर्म यच्छ विश्वेदेवा
जरदष्टिर्यथा सत् ॥ अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन
जीव । मित्रावरुणयोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव
बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव ॥ ३ ॥ स मृ-
ताण्डोऽयं सजीवन्नेव संजीवयामीति, स त्रयोदशमासोयं
रविः सन्नरकारिर्यन्नेतान्मार्तण्डः एतानामित्येतत्प्रसादया-
मीति तच्चाऽधिमासोयं वन्यश्चतुःपर्वण्यऽधीतान्स्वधार्हा-
न्यथोपपत्तिः सुशाखायाः सुधर्मकर्मणोस्तत्क्षेत्रं मृजन्ते
तस्मात्तत्क्षेत्रोयं यत्प्रतीच्यां दिशि मूलेयं चक्रे तच्चक्र-
कोटी च तीर्थान्पापीनां महान् प्रशाम्यते यत्तत्पाप-
शमनोऽयं तत्र तम् ॥ ४ ॥ सप्तर्षीणां मही तन्मूलजा-

ह्व्यायां तज्जलं वहन्तीयं या सा चाकायामऽघोराणां निष्पीडिताम् । या सा चाकायां नित्ये तन्नित्यजाह्व्यां यामीत्येतत्सत्यं श्रोतृभ्यस्तच्छ्रुतं विमलकमलौ नागौ तन्मूलभौवने गरुडपङ्कजे जले जलान्तरेयम् । यायुगीनां यायुगीश्वर्या सा सिद्धान्तदोपान्ति तद्रुद्रे रुद्रैरुद्रेन्मेधाया शतरुद्रेयं देवानां कूष्माण्डं तद्धोतव्यं यजेत । "ये देवा दिव्येकादशस्थ पृथिव्यामध्येकादश स्थ । अप्सुषदो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्" । ते भुवनीयानामधेयामही पृथिवी क्षेत्राणां तत्क्षेत्राधिक्षेत्रोयं यत्कश्यपस्यार्थीनां दातुर्मेमाहोत्यार्थीनां कृतिते यत्सृजन्ते ॥ ५ ॥ तस्मात्कश्यपनाम्नोऽयं यन्मण्डलोयं क्षेत्राणां क्षेत्रादिदं रविक्षेत्रोयं तदादिमूलभवानी मही यस्यार्थेनः ब्रह्मा राजन्देवोयं भारद्वाजो देवर्षेः पुत्रः तत्र त्रयोदशमासः सूर्येण दातुमेतद्ब्रह्मवर्चसकामोयं प्रतिगृह्णीयं प्रार्थनेयमभ्यार्चितम् ॥ "धाता दधातु नो रयिमीशानो

जगतस्पतिः । स नः पूर्णेन वावनत् ॥ प्रजापती रमयतु
प्रजा इह धाता दधातु सुमनस्यमानः । संवत्सर ऋतु-
भिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्बभूव ॥" धाता दधातु
तद्धाते प्रतिगृह्णीयं गृह्णाति, तद्वयो दातृ भूयान्मयो मह्यं
प्रतिगृहीता क इदं कस्मा अदः कामङ्कामायेति कामो हि
दाता कामः प्रतिगृहीता कामः समुद्रमाविशदिति कामै-
तत्ते स्वस्ति ॥ ६ ॥ नमो अस्तु सर्पेभ्यो ये के च पृथि-
व्यामधि । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
येषु वा यातुधाना ये वा वनस्पतीरनु । येऽवटेषु शेरते
तेभ्यः सर्पेभ्यो नमः ॥ ये वाऽदो रोचने दिवो ये वा सूर्यस्य
रश्मिषु । येप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥
धन्वना गा धन्वनाऽजिञ्जयेम धन्वना तीव्राः समदो
जयेम । धन्वना शत्रोरपकामङ्कृणोतु धन्वना सर्वाः प्रति-
दिशो जयेम ॥ नमो अस्तु० । तत्क्षेत्रेभ्यस्तद्देदेभ्यस्तदा-
दिमूलभावानी तद्वारद्वाजोयमृषिपुत्रस्योपपत्तेस्तद्देदान्वद-

न्तीति तद्ब्रह्मणेभ्यस्ते भुवनाधिपतिना । "देवं मातॄ-स्त्रीन्पितॄन्बिभ्रदेकमूर्धस्तस्थानिमवग्लापयन्ति । मन्त्रयन्ते दिवो अमुष्य पृष्ठेदं परमं वेदेयं विश्वमिदं वाचमविश्वमि-न्वाम्" ॥ वेदान्वेदन्तीति तद्भरद्वाजोयमृषिपुत्रस्योपपत्तिः, तद्वेदान्धार्यमाणं यामीति तथोपपन्नाश्चातुर्होतृकात्रैता-ग्निकानां होत्राग्नियानाम् । सितासिताभ्यां पक्षाभ्यामु-भयोः प्रत्यहं धारयन्धारणाद्धते ॥ ७ ॥ तच्चतुर्वेदोच्चारयं तद्ब्रह्मपुत्रं तद्ब्रह्मणो यो वेदानुच्चारयन्तं श्रुतीः श्रोतव्याः पठ्यं पठतां यः स श्रोत्रियो यं मह्याधिपाः परिपालयन्ते तमायुरारोग्यमैश्वर्यं भुक्तिं मुक्तिं नः संवर्धयन्ति । तथै-तानां पार्थिवीयानां तथेन्द्राणामघोराणामाघोराणात्प्रजा-यन्ते । "धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ प्रजापती रमयतु प्रजा इह दाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु" ॥ संवत्सरः संवत्सरो विराड्विराज-

मेवाप्नोति अत्राधिकवसुभ्यो मासानहः षडिन्धवो नालिकाश्चतुर्णाम्। तदिन्धवो तादिन्धवः पूर्णे पौर्णमास्यां द्वात्रिंशद्भिः दर्शः देशे षोडश ऋतून्तद्धोमान्होतव्यं यजेत। ततस्तन्मलिम्लुचान्तं "मलिम्लुचो नामासीत्त्रयोदशमासान्। सहस्रधा रेवती समस्वरन्दिवो नाके मध्वजिह्वा असश्चतः। तस्य स्पृशो न निमिषन्ति तूर्णयः पदे पदे पाशिनः सन्ति सेतवः। मलिम्लुचो नामासि त्रयोदशमासः। इन्द्रस्य शर्मास्येन्द्रस्य वर्मासीन्द्रस्य वरूथमसि। तन्त्वा प्रपद्ये सगुः साश्वः सपुरुषः सह यन्मे स्थितेन स मे शर्म च वर्म च। भवा गायत्रीं लोमभिः प्रविशामि त्रिष्टुभं त्वचा प्रविशामि जगतीं मांसेन प्रविशामि आनुष्टुभमस्थ्ना प्रविशामि पांक्तिं मज्ज्ञा प्रविशामि॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविदन्ति शूराः। तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः"॥ सहस्रधा रेवती सरस्वती दिवो ना मविशा-

मीत्यन्तैर्वेदन्ते ॥ ८ ॥ यद्वेदि यद्वेदमधीते तद्ब्रह्मयज्ञैर्दे-
वाग्निः पितृकर्मणोऽकुर्वन् । अच्छिन्नं पुत्राग्नेस्त्वाता यद्भू-
र्भुवःस्वरथैतानां सर्वानां प्रयच्छताम् । ततः श्रद्धेति श्रद्धया
पितृयज्ञ एषां तिष्ठते तस्मात्त्रयोदशमं भानुक्षेत्रमिदम् ।
अघोराणाम सरित् सा सत्यभामासहितो रविः तदेतद्द-
क्षिणं पादपङ्कजि सत्यश्रोतिस्तन्मूले निजले–श्रद्धेतां श्रद्धां
हत्वाऽन्यत्सुधर्मकर्मणे । तदेवयज्ञः पितृयज्ञो भूतयज्ञो
मनुष्ययज्ञो ब्रह्मयज्ञः स ब्रह्मवर्चसकामान्वा अन्यपात-
कान्वा महापातकिनां सहस्रपातकानां तामुत्तार्यातामम्मुं
स्वर्गं लोकं प्रविश्यताम् ॥ ९ ॥ यद्वेद वेदान्दर्शतां त-
द्विष्णोः परमं पदम् , इदमावाहयामीदमर्चयित्वा प्रपू-
जितम् । तद्धोमा होतव्यं यजेत । "अग्निर्होता नो अध्वरे-
वाजी सत्परिणीयते । देवो देवेषु यज्ञियः ॥ अग्निर्होता
कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो देवेभिरागमत् ॥
कविमिच्छा विद्ध्यनेन विद्वान् । वियस्तस्तम्भ षडिमा

रजांस्यऽजस्य रूपे किमपि स्विदेकम् ॥ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौसुमनस्ये स्याम ॥ तन्मलिम्लुचान्तं मलिम्लुचयामीति त्रयोदश एतन्नरकारि यत्स त्रयोदशमासीति हरयः सुपर्णाः । यद्गायत्री अधिगायत्री सामवेदैश्चतुर्णामुदारयन्ति ऋग्यजुःसामाथर्वाणो होतव्यमेतद्धोतव्यः । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इषे त्वोर्जे त्वा वायवःस्थोपायवःस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ अग्न आयाहि वीतये गृणातो हव्य दातये । निहोता सत्सि बर्हिषि ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥ ऊर्जो विभ्रद्वसो वनेस्सुमेधा गृहानां गा मोदमानः सुवर्चः । अघोरेण चक्षुपाऽहं शिवेन गृहाणां पश्यन्वाय उत्तरामि । गृहाणामायुः प्रवयन्ति रामाः । गृहा अस्माकं प्रतेरन्वायुः । "येन देवा

ज्योतिषोर्ध्वा उदारयन्येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानाय स्वस्ति ॥ तरणिः विश्वदर्शितो ज्योतिष्कृदस्य सूर्य । विश्वमाभासि रोचनम् ॥ दिवो रुक्मा उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः । नूनञ्जनः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हरिद्रवेषु मे हरिमाणं निदध्मसि ॥ उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥ समैक्षिषोर्ध्वमहसा आदित्येन महीयसा । अहं यशस्विनां यशो विश्वा रूपाण्यादधे ॥ उद्यन्नद्य विनो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेषिषे तस्य नो धेहि सूर्य ॥ उद्यन्तन्त्वा मित्रमह आरोहन्तं विचक्षणः । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ अनेन० ह्रां ह्रांसः सूर्यः० प्रीतोस्तु ॥ इति मत्स्यभवने मार्तण्डब्राह्मणं यजेत् ॥ समाप्तम् ॥

अथ ऋग्वेदे विष्णुबुधसूक्तानि ॥ ध्यानं विष्णोः ॥ परो वैष्णव ऊरुमिन्द्रश्च तिस्रोऽनूमर्त्तः ॥ परो मात्रया तन्वा वृधान, न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसे पृथिव्या, विष्णो देव त्वम्परमस्य वित्से ॥ न ते विष्णो जायमानो न जातो, देवं महिम्नः परमन्तमाप । उदस्तभ्ना नाकमृष्वं बृहन्तं, दाधर्थ प्राचीङ्ककुभं पृथिव्याः ॥ हिळावती धेनुमती हि भूतं, सूयवसिनी मनुष्ये सदस्या । व्युष्टभ्ना रोदसी विष्णवेते, दधातू पृथिवीमभितो मयूखैः ॥ उरुं यज्ञाय चक्रथूरुलोक, जनयन्ता सूर्यमुषासमग्निम् । दासस्य चिद्वृषशिप्रस्य माया, जघ्नुथुर्नरा पृतनाज्येषु ॥ इन्द्राविष्णू दृंहितः शम्बरस्य, नवपुरो नवतिश्च श्रथिष्टम् । शतं वर्चस्विनः सहस्रं च साकं, हथो अप्रत्यसुरस्य वीरान् ॥ इयं मनीषा बृहती बृहन्तो रुक्रमा तवसा वर्धयन्ती । ररेवांस्तोमं विदथेषु विष्णो, पिन्वतो इषो वृजिनेष्विन्द्र ॥ नपद्ले विष्णु आस

आकृणोमि, तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे, यूयं पात स्वस्तिभिः सदा नः ॥ नमन्तो दयते सविष्यन्यो विष्णव उरुगायाय दाशत् । प्रायः सत्राचा मनसा यजेत, एतावन्तमर्यमा विवासत् ॥ त्वं विष्णो सुमतिं विश्वजन्वा, मप्रयतामेव यावोमतिन्दाः । पर्चो यथानः सवितस्य भूरी, रश्वावतः पुरुश्चन्द्रस्य रायः ॥ त्रिन्दिवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तवीया, न्त्वेषं ह्यस्य स्थविरस्य नाम ॥ विचक्रमे पृथिवीमेष एतां, क्षत्राय विष्णुर्मनुष्ये दश स्यात् । ध्रुवासो अस्य कीरयो जनास उरु क्षितिं सुजनिमाचकार ॥ प्रतत्ते अद्य शिपिविष्टनामा, यः शंसामि वयुनानि विद्वान् । तन्त्वा गृणामि नवसामतव्या, क्षयन्तमस्य रजसः पराके ॥ किमत्ते विष्णो परिचक्षमऽभूत्प्रयद्विवक्ष्ये शिपिविष्टो अस्मिन् । मा वर्पो अस्मदपगूह एतत्, यदन्यरूपः समिथे बभूव ॥ वषट्

ते विष्ण० ॥ ॥ उद्बुध्यध्वं बुधाः सौम्यं नवम्यन्ते जगत्यौ पञ्चमी बृहतीगायत्र्योर्मध्ये ॥ ॥ उद्बुध्यध्वं सुमनसः सखायः, समग्निसिन्धुं बहवः सनीळाः । दधिक्रामऽग्निमु-षसञ्च देवीमिन्द्रावतो वसूनि ह्वयेवः ॥ मन्द्रा कृणुध्वं धिय आतन्वध्वं, नावमरित्रमरणीं कृण्वध्वम् । इष्कृणु-ध्वमायुधारं कृणुध्वं, प्राञ्चयज्ञं प्रणयता सखायः ॥ यु-नक्तु सीरा वियुगा तन्वध्वङ्कृते योनौ वपतीह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो, नोदीय इच्छृण्यपक्वमे-यात् ॥ सीरा युञ्जन्ति कवयो, युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया, निराहावाङ्कृणोतु न ॥ संवरत्रा दधातन, सिञ्चामह अवततम् । मुद्रिणं च वयं क्रतौ, सुषेकमनुपक्षितम् ॥ इष्कृता हावमवतं, सुवरत्रं सुषेचनम् । उच्क्रिणं सिञ्चे अक्षितम् ॥ प्रणीताध्वान्हिताञ्जयाय, स्व-स्तिवाहं रथमित्कृणुध्वम् ॥ द्रोणहावमवतमश्मचक्रं, सं-सत्रकोशं सिञ्चता नृपाणम् ॥ व्रजङ्कृणुध्वं सहिवो नृ-

पाणो, वर्मसे व्यध्वं बहुला पृथूनि । पुनः कृणुध्वं माय-सीरदष्टः, सात्रस्तिस्रोर्च हसो दहतातम् ॥ आवोधियं य-ज्ञियां वर्त ऊतये, देवो देवीं यजतां यज्ञियामहे । सानो दुहीयद्यवसेव गत्वी, सहस्रधारा पयसा महीङ्गोः ॥ आ-तूषिञ्च हरिमिन्द्रोरुपस्थे, वाशीभिस्तक्षताश्म धमयीभिः । परिषजष्वन्दशकक्ष्याभि, रुभेध्वरौ प्रतिवह्निं युक्तु ॥ उभौ ध्वरौ वह्निरप्यब्दमानोऽन्तर्येनेव चरति द्विजानि । वन-स्पतिं वन आस्थापयिध्वं, निषूदधिध्वमखननन्त उत्सम् ॥ कपृन्नरः कपृथमुदधात, नचोदयत खुदतवाजसातये । निष्ठग्र्यः पुत्रमाप्यावथोतय, इन्द्रं सबाध इह सोम पीतये ॥ अनेन मन्त्रहोमेन आत्मनो० पितुर्विष्णोः समस्त-प्रेतविष्णूनां अतीत० प्रथमे विष्णुश्राद्धे वा त्रयेन्द्रशे दृथ्वीरूपो विष्णुः प्रीयतां प्रीतोऽस्तु ॥ इति ऋग्वेदे विष्णुवृषसूक्तम् ॥

अथ ऋग्वेदे ब्रह्मध्रुवसूक्तम् ॥ ध्यानम् ब्रह्मणः। सोमानमिति पञ्च ब्रह्मणस्पत्या चतुर्थ्यादि... सोमश्च ... -न्याः

सदस्पत्या नाराशंसीं वात्या प्रत्यन्तमग्निमारुतम् ॥ ॥ सोमानं स्वरणङ्कृणुहि ब्रह्मणस्पते । कक्षीवन्तं यय औषजः ॥ यो रेवाण्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥मा नः शंसो अररुषो धूर्तिं प्राणङ्मर्त्यस्य । रक्षाऽणो ब्रह्मणस्पते ॥ मघा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः । सोमो हिनोति मर्त्यम् ॥ त्वन्तं ब्रह्मणस्पतिः सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ यस्मादृते न सिद्ध्यति यज्ञो विपश्चितश्च न । सधीनां योगमिन्वति ॥ आ वृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् । होता देवेषु गच्छति ॥ नराशंसं सुदृष्टं मम पश्यसप्रथस्तमम् । दिवो न सद्म मखसम् ॥ प्रति त्यश्चारुमध्वरं गोपीथाय प्रहूयसे । मरुद्भिरग्न आगहि ॥ नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आगहि ॥ यो महो रजसो विदुर्विश्वेदेवासो अद्रुहः । मरुद्भिरग्न ॥

य उग्रा अर्कमानर्चुरनाधृष्टास ओजसा । मरुद्भिरग्न० ॥
ये शुभ्रा घोरवर्चसः सुक्षेत्रासो रिषादसः । मरुद्भिरग्न० ॥
ये नाकस्याधिरोचने दिवि देवास आसते । मरुद्भिरग्न० ॥
ये रीङ्खयन्ति पर्वतान्तिरः समुद्रमर्णवम् । मरुद्भिरग्न० ॥
आ ये तन्वन्विरश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न० ॥ अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न० ॥ इति ऋग्वेदे ॥ अथ यजुर्वेदे ॥ वसवस्त्वोदीरयन्तु रुद्रास्त्वोद्दीर्पयन्तु आदित्यास्त्वोच्छ्रयन्तु विश्वे त्वा देवा दृंहन्तु ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् । देवा ह धर्मणा ध्रुवा यजमानः पशुर्ध्रुवः ॥ दिवि दिव्यान्दृंह, अन्तरिक्षेऽन्तरिक्षान्दृंह, पृथिव्यां पार्थिवान् दृंह ॥ आ त्वा हर्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्यज्ञो अधिभ्रशत् ॥ ध्रुवन्ध्रुवेन हविषा हविश्व सोमन्नयामसि । यथा न इन्द्र केवली विशो बलिर्ह्रतस्करत् ॥ स्वाहा दिवमाप्यायस्व, स्वाहा-

ऽन्तरिक्षदाऽप्यायस्व स्वाहा पृथिव्या आप्यायस्व स्वाहा ॥ आयुर्धा असि ध्रुवायुर्मे धेहि, वयोदा असि ध्रुववयो मे देहि, तनूपा असि ध्रुवतनूं मे पाहि, चक्षुष्पा असि ध्रुवचक्षुर्मे पाहि, वर्चोधा असि ध्रुवंवर्चो मे धेहि ॥ अध्वर्योयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देवयज्ञः ॥ इहैवैधि मापच्योष्ठाः पर्वता इवाविचाचलत् । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुदारय ॥ इममिन्द्रो अदीधरद्ध्रुवन्ध्रुवेण हविषा हविः । तस्मै सोमो अधिध्रुवत्तस्मा उ ब्रह्मणस्पतिः ॥ ध्रुवाद्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ अनेन मन्त्रहोमेनात्मनो० पितुर्विष्णोः प्रथमे वा त्रयोदशे विष्णुश्राद्धे अपरूपः ब्रह्मा प्रीयतां प्रीतोस्तु ॥ इति यजुर्वेदे ध्रुवसूक्तम् ॥ २ ॥

अथ ऋग्वेदे [illegible]केतुसूक्तम् ॥ [illegible] ॥ केशी [illegible]

वातरशना एकर्चाः केशिनं जूतिर्वातजूतिर्विप्रजूतिर्वृषाणकः कनिक्रतुः एतच्च ऋष्यश्रृङ्गश्चोत देवाः सप्त ऋषय एकर्चा वैश्वदेवम् ॥ ॥

ॐ केश्यग्निङ्केशी विषङ्केशी बिभर्ति रोदसी। केशी विश्वं स्वन्दृशे, केशीदञ्ज्योतिरुच्यते ॥ मुनयो वातरशनाः पिशङ्गा वसतेऽमला। वातस्यानु ध्राजिं यन्ति, यद्देवासो अविक्षत ॥ उन्मुदितासौ नो येन, वातामातस्थिमावयम्। शरीरे अस्माकं यूयं मर्तासो अभि पश्यथ ॥ अन्तरिक्षेण पतन्ति विश्वारूपा वचाकशत्। मुनिर्देवस्य देवस्य सौकृत्याय सखा हितः ॥ वातस्याऽश्वो वयोसखाऽथो देवेपितो मुनिः। उभौ समुद्रौ वाक्षितिर्यश्च पूर्व उताऽपरः ॥ अप्सरसां गन्धर्वाणां मृगानां चरणे चरन्। केशीकेतस्य विद्वान्सखा स्वादुर्मतिन्दमः ॥ वायुरस्मा उपामन्थ पिनष्टि स्माकुणन्नसा। केशी विश्वस्य पात्रेण यद्रुद्रेण।पिबन्सह ॥ उत देवा अविहितन्देवा उन्नयथा पुनः। उतागश्चक्रुषन्देवा, देवा जीवयथा पुनः ॥ द्वाविमौ

वातो वात आसिन्धोरपरावतः । दक्षन्ते अन्य आवातु परान्यो वातयद्रपः ॥ आवात वाहि भेषजं विवात वाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ आ-त्वागमंशन्तातेभिरथो अरिष्टतातेभिः । दक्षन्ते भद्रमा-भार्षं परायक्ष्मं सुवामि ते ॥ त्रायन्तामिह देवास्त्रायतां मरुतां गणः । त्रायन्तां विश्वा भूतानि यथायमरपा असत् ॥ आपो यद्वातभेषजीरापो अमीव चातनीः । आपः सर्वस्य भेषज्यस्तास्ते कृण्वन्तु भेषजम् ॥ हस्ताभ्यां दशशा-खाभ्यां जिह्वा वाचा पुरोगवीः । अनामयं यत्नुभ्यां त्वा ताभ्यान्त्वोपस्पृशामसि ॥ इति ऋग्वेदे ॥ अथ यजुर्वेदे ॥ ॥ आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः । अग्निं पुरा तनुयित्नुरचित्ताद्धिरण्यरूपमवसे कृण्वध्वम् । कद्धिष्ण्या सवृधा सानो अग्ने, कद्वाताय प्रवतसे शुभं ये । परिज्मानो नासत्याय क्षत्र ब्रुवत्कदग्नेरुद्रायदग्ने ॥ अग्नि-र्होता साध्वीं मक्र अग्न आयूंषि पवसे । अग्ने पवस्व स्वपा

अस्मे वर्चस्व वीर्यं दधद्रयिं मयिपोषम् ॥ यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ । अना-शसन्तमदितिः कृणोतु समित्रेण वरुणो नसजोषाः ॥ महश्चार्कन्सर्वतः क्रतुश्रा दधिक्राव्णः पुरुवानस्य वृष्णः । यं पुरुभ्यो दीदिवांसन्नाग्निर्मधुधुर्मित्रावरुणा उत्तरिम् ॥ ऋतावानं वैश्वानरं वैश्वानरस्य सुमतौ स्याम उक्षान् । नाय उशान्नायसोमपृष्टा यवेधसेस्तोमैर्विधेमाग्नये ॥ तृषु यता तृषुणावनक्ष तृषुं दूतं कृणूते यव्हो अग्निः । वातस्य मेळिं सचते निजूर्वन्नाशुन्न जयते हिते अर्वा ॥ अग्निरेशेवसव्य-स्याग्निर्महः सौभगस्या तान्यसभ्यं रासति ॥ त्वमग्ने व-सुपतिं वसूनां मभिप्रमन्दे मधुरेषु राजन् । त्वया वाजं वाजयन्तो जयेमा भिष्यामपृत्सुती मर्त्यानाम् ॥ त्वेय-विष्ट दाशुषे नॄं पाहि शृणु धीगिरः रक्षतोकसुतत्मना । तुभ्यम्भरन्ति क्षितयो यविष्ट, बलिमग्ने अन्तित उत दूरात् ॥ अभिं दिष्टस्य सुमतिं चिकिद्धि बृहते अग्ने महि

शर्म भद्रम् । कृष्णा रजांसि पत्सतः प्रयाणे जातवेदसः
अग्निर्यद्रोधतिक्षसि ।। त्वे वसूनि पूर्वणीक होत दोषव-
स्तोरेरिरे यज्ञियासः । क्षामेव विश्वा भुवनानि यस्मिन्सं-
सौभगानि दधिरे पावके । प्रवः सखायो अग्नये स्तोमं
यज्ञश्च धृष्णया । अर्चगाय च वेदसे ।। प्रवः शुक्राय भा-
नवे भरध्वं हव्यमतिं चाग्नये सुपूतम् । यो दैव्यानि म-
नुषा जनूंष्यतुर्विश्वानि विद्मना निजगाति ।। विज्योतिषा
विपाजसा सत्वमग्ने प्रतीकेन । प्रत्यूषे यातुधान्या उरु-
क्षयेषु दीध्यात् ।। तं सुप्रतीकं सदृशं स्वञ्चम विद्वांसो
विदुष्टरं सुपेम । स भक्षद्विश्वा वयुना विविद्वान्प्रहव्य-
मग्निरमृतेष्ववोचः ।। युक्ष्वा हि देवहूतमां अश्वामग्ने
रथीरिव । निहोता पूर्व्यासदः ।। उत नो देवदेव्यां, अ-
च्छावचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ।। त्वं हि
यत्यविष्ठ्य सहसंस्रून आहुत । ऋतावा यज्ञियो भुवः ।।
अयमग्निः सहस्रिणः तन्नोमि ऋभवो यथा । नमस्व सह-

तिभिः ।। नेदीयो यज्ञमङ्गिरः कस्मै नूनमभिद्यवे । वाचा विरूपनित्यया वृष्णे चोदस्व सुष्टुतिम् ।। कमुष्विदस्युसेनयाऽग्नेरपाकचक्षसः । पाणि गोषुत्तरामहे ।। मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशन्नहासुरघ्न्याः ।। मानः समस्याढ्यः परिद्वेषसो अंहतिः । ऊर्मिर्न्ननायमावधीत् ।। नमस्ते अग्न ओजसे गृणन्ति देवकृष्टयः । अमैरमित्रमर्दय ।। कुवित्सरोग इष्टयेऽग्नेः संवेषियो रयिम् । उरु कृदुरुणस्कृधि ।। मानो अस्मिन्महाधने परा वर्ग्भारभृद्यथा । संवर्गं संरयिञ्जय ।। परस्मा अधिसंवत, एहूषु ब्रुवाणि ते ।। अनेन मन्त्रहोमेनात्मनो पितुर्विष्णोः प्रथमे वा त्रयोदशे विष्णुश्राद्धे तेजोरूपः शिवः प्रीयतां प्रीतोस्तु ।। ।। इति रुद्रकेतुसूक्तम् ।।

अथ ऋग्वेदे प्रजापतिशनैश्वरसूक्तम् ।। नासत्सप्तमः प्रजापतिः परमेष्ठी भाववृत्तं तु यो यज्ञः प्राजापत्योजगत्याद्या ।। प्रजापतेर्ध्यानम् ।। ।। नासदासीन्नोसदासीत्तदासीन्नासीद्रजो नो व्यमापरायत् । किमावरीवः कुहकस्य शर्मन्नम्भः

किमासीद्गहनं गभीरम् ॥ न मृत्युरासीदमृतन्न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीत वातं सुधया तदेकन्तस्माद्धान्यन्नपरः किञ्च नाम ॥ तम आसीत्तमसा गूढमग्रे प्रकेतं सलिलं सर्वमा इदम् । तुच्छेना त्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥ कामस्तदग्रे समवर्त्तताधि मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ तिरश्चिनो विततो रश्मिरेषा मदस्विदासीदुपरिस्विदासीत् । रेतोद आसन्महिमान आसन् सुधा अधस्तात्प्रयति पुरस्तात् ॥ को अद्धावेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनीयानऽथो को वेद यत आबभूव ॥ इयंविसृष्टिर्यत आबभूव यदि वा दधेयं यदि वा न वेद । यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ॥ यो यज्ञो विश्वतस्तन्तुभिस्तत, एक शतन्देवकर्मेभिरायतः । इमे वयन्ति पितरो य आययुः प्रवयापवयेत्यासते उत ॥

प्रसामेनन्तनुत तत्कृण्वन्ति पुंसां वितते अधिनाके अ-
स्मिन् । इमे मयूखा उपसेदुरसदस्सामानि चक्रुस्तसुराण्युत
वै ॥ कासीत्प्रमा प्रतिमा किं निदानमाज्यङ्किमासीत्प-
रिधिः क आसीत् । च्छंदः किमासीत्प्रतगेङ्क्किमुक्तं यद्देवा
देवमयजन्त विश्वे ॥ अग्नेर्गायत्र्युभवन्सयुग्वोष्णिहया स-
विता सम्बभूव । अनुष्टुभा सोम उक्तैर्महस्वां बृहस्पते बृहते
मांचवत् ॥ विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुभिहा
भगो अह्नः । विश्वान्देवाजगत्याविवेश तेन चाक्लृप्य
ऋषयो मनुष्याः ॥ चाक्लृप्य तेन ऋषयो मनुष्या यज्ञजाते
पितरो नः पुराणाः । पश्यन्मन्ये मनसा चक्षासामा तान्य
इमं यज्ञमयजन्त पूर्वे ॥ सहस्तोमः सहच्छन्दस्स आवृतः
सह प्रमा ऋषयः सप्तदेव्यः । पूर्वेषां पन्थामनुदृश्य धीरा
अन्वलोभिरे रथ्योन रश्मीन् ॥ इति ऋग्वेदे ॥ अथ यजुर्वेदे
॥ प्रजापतिर्वा इदमिति अग्निहोत्रमन्त्रः प्रियमेधसः प्रजापतेः ॥
प्रजापतिर्वा इदमासीत्तस्मादग्निरध्यसृत सौम्यमूर्ध्ना । ऊर्ध्वं

उदद्रवत्तस्य यल्लोहितमासीत्तदपासृष्ट तद्भूम्यान्यमान्युत । उदुम्बरोऽजायत तस्मात्स लोहितं पश्यत । स मां प्रद्रवत्तं स्वा वागैद्ध जुहुधीति । स इतः पर्यस्रष्ट तत्स्वाहेत्यजुहोत्त-स्मादेषैवमाहुति स्वाहैनं वागैद्ध तस्मान्न ललाटे लो-मास्ति न पाण्योः । तस्मादरित्रमात्री स्रुग्भवति चक्षुर्वास तत्स्वमजुहोद्ऽमुमेवादित्यमग्नौ ज्योतिर्ज्योतिरग्नौ इति ज्योतिरिव ज्योतिष्यऽजुहोद्ब्रह्माऽजुहोत्सत्यजुहोदमुमेव तदादित्यमजुहोदेष ह्येवाग्निहोत्रं श्वः श्वो वसीयान्भवति यस्यैवमग्निहोत्रं हूयते ॥ न वै पुराहोत्रात्रे आस्तां त एत-याहुतिभ्यो सहासृजेतां यत्सायं जुहोति । तेन भ्रातृव्याय पराचीं विवासयति यत्प्रातस्तेनात्मना प्रतीचीमग्नेर्वै गुप्त्या अग्निहोत्रं हूयते यत्सायं जुहोति तेनैनं रात्र्यै रमयति यत्प्रातस्तेनाह्ना एषा वा अग्ना आहुतिः प्रथमाहुता यद-ग्निहोत्रं तस्मादग्नौ सर्वा आहुतयो हूयन्ते अथैषैवाग्निहो-त्रमुच्यते अग्निहोत्रं हवै नाम नास्मादन्यः समानेषु वसी-

यान्भवति यस्यैवमग्निहोत्रं हूयते ॥ ॥ अनेन मन्त्रहोमेनात्मनो-
पितुर्विष्णोः प्रथमे वा द्वितीये ३।४।५।६।७।८।९।१०।११।
१२।१३ वा त्रयोदशे विष्णुश्राद्धे वायुरूपो यमः प्रीयतां
प्रीतोस्तु ॥ ॥ इति प्रजापतिशनिसूक्तम् ॥ ४ ॥

अथ ऋतुनारायणसूक्तम् ॥ वषट् ते विष्ण आस आकृ-
णोमि तन्मे जुषस्व शिपिविष्ट हव्यम्। वर्धन्तु त्वा सुष्टुत-
यो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ध्यानम् ॥ देवा-
नामेकेन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्यो-
ऽतो देवा दैवी वा ॥ ॥ अभि नो देवीरवसा महः शर्मणा
नृपत्नी। अच्छिन्नपत्राः सचन्ताम्[1] ॥ इहेन्द्राणीमुपह्वये वरु-
णानीं स्वस्तये । अग्नायीं सोमपीतये[2] ॥ मही द्यौः पृथिवी
च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः[3] ॥ त-
योरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे
पदे[4]॥ स्योना पृथिवि भवानृक्षरा निवेशिनी । यच्छाऽऽनः
शर्म सप्रथाः ॥ अतो देवा अवन्तु नो यतो विष्णुर्वि-

चक्रमे । पृथिव्याः सप्त धार्मभिः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाँसुरे ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ॥ अथ यजुर्वेदे विष्णुबुधसूक्तम् ॥ अग्नेस्तनूरसीत्यग्न्यादीनां देवानां पतिरग्निस्तनूपा वायुः शवसा शक्करी वरुणः शग्मनोजिष्ट इन्द्रो देवस्य उभया मैत्रावरुण्याः नार्यसीत्यनुवाकः सिंह्याः संवत्सरीर्याः अग्ने अग्निरिति गर्भस्य प्राजापत्यस्येन्द्रघोषस्त्वा इत्यरुणानां केतूनाम् ॥ अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वाऽतिथेरातिथ्यमसि विष्णवे त्वा अग्नये त्वा रायस्पोषदे विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा पतये त्वा परिपतये गृह्णामि तनूनप्त्रे शग्मने शक्कराय शग्मनो

जिष्टायानाधृष्टमस्यऽनाधृष्टं देवानामोजोऽभिशस्तिपा अ-
नभिशस्ते न्यमञ्जसासत्यमुपगां सवितेमा धा अग्ने व्रतपा
असे व्रतपास्त्वे व्रतपा व्रतिनां व्रतानि याग्ने मम तनूरेषा
सा त्वयि या तव तनूरियं सा । मयि सहनाव्रतपा व्रतिनां
व्रतानि । या ते अग्ने रुद्रिया तनूस्तस्या नपाहि तस्यैते
स्वाहांशुरंशुस्ते देव सोमाप्यायतामिन्द्रायैकधन आ तुभ्य-
मिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्यायाय सखी-
न्सन्या मेधया स्वस्ति ते, देव सोम स्वत्यामशीय स्वस्त्यो-
रुपचोमैष्टाराय, एष्टवामानि श्रेष्ठे भगायन्त मृतवादिभ्यो
नमोदिवे नमः पृथिव्यै, या ते अग्नेयाशया तनूर्वर्षिष्ठा गह-
नेष्टा वर्षिष्टा गह्वरेष्टा, उग्रं वचोपावधीत्त्वेषां वचोपावधी-
त्स्वाहा, या ते अग्नेरजाशया हराशया तनूर्वर्षिष्ठा गहनेष्टा
वर्षिष्टा गुह्वरेष्टा, उग्रं वचोऽपावधीत्त्वेषां वचोऽपावधी-
त्स्वाहा । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यामाददे नारीरसि, इदमहं रक्षसो ग्रीवा अपि कृन्ता-

मीदमहं यो नः समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपि कृन्तामि, तस्मायन्यविचायन्यस्यऽव्रतान्मा नाथित मवताव्यथितमग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुर्नानाम्नेहियत्तेनाधृष्टं नामानाधृष्टं तेन त्वादधेऽग्ने, अङ्गिरोयो द्वितीयस्यां यस्तृतीयस्यां पृथिव्यामस्यायुर्नानाम्नेहि यत्तेनाधृष्टं नामानाधृष्टं तेन त्वा दधे विदेदग्नेर्नभो नाम सिंहिसि महिष्यसि देवेभ्यः पृथस्व देवेभ्यः कल्पस्व देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व॥ विभ्राट् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतं वातजूतयो अभिरक्षत्यत्मना प्रजाः पिपर्त्ति बहुधा विराजति ॥ इन्द्रघोषास्त्वा वसवः पुरस्तात्पान्तु, मनोजवसस्त्वा पितरो दक्षिणतः पान्तु, प्रचेतास्त्वा रुद्रैः पश्चात्पातु, विश्वकर्मा त्वाऽदित्यैरुत्तरतः पातु, त्वष्टा त्वा रूपैरुपरिष्टात्पातु, सिंह्यसि सपत्नसाही स्वाहा, सिंह्यसि रायस्पोषवनिः स्वाहा, सिंह्यसि सुप्रजावनिः स्वाहा, सिंह्यस्यादित्यवनिः स्वाहा,

सिंह्यस्यां वह देवान्देवाय ते यजमानाय स्वाहा भूतेभ्यस्त्वा विश्वायुरसि पृथिवीं स्कभानाच्युतक्षिदऽस्यान्तरिक्षं स्कभान, ध्रुवक्षिदसि दिवं स्कभानाग्ने कुलायमस्याग्नेः पुरीषमसि यज्ञः प्रतिष्ठाम् ॥ ॥ मनुषुत्वा निधीमहि मनुषु समिधीमहि । अग्ने मनुषुदङ्गिरो देवान्देवयते यज ॥ युञ्जते मा न उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वयुना विदेक, इन्मही देवस्य सवितुः परिष्टुतिः । देवश्रुतौ देवेष्वाघोषेथाम् ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ इळावती धेनुमती हि भूतं सूर्यवसिनी मनुष्ये यशस्ये । व्युष्टभ्ना रोदसी विष्ण एते दधात्थ पृथिवीमभितो मयूखैः, वैष्णवमसि विष्णुस्तु तुश्नातु ॥ दिवो वा विष्णुरुत वा पृथिव्या महो वा विष्णुरुतोर्वन्तरिक्षात् । हस्तौ पृणस्व बहुभिर्वासव्यैरापृयच्छ दक्षिणादुत सव्यात् । विष्णुर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।

यो अस्कभायदुत्तरं सदस्थं विचक्रमाणस्त्रेधोरुगायः॥ विष्णोः पृष्ठमसि विष्णो रराटमसि विष्णोः शप्त्रेस्तो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वऽधिक्षियन्ति भुवनानि विश्वाः ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां । पूष्णो हस्ताभ्यामादधे ॥ इदमहं रक्षसो ग्रीवा अपि कृन्तामि, इदमहं यो नः समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपि कृन्तामि । बृहन्नसि बृहद्ग्रीवा बृहतीमिन्द्राय वाचं वद रक्षोहनं बलगहनं वैष्णवीमिदमहं तान्बलगानुद्वपामि । यो नः समानो यो नोऽसमानो निचखानेदमहं तान्बलगानुद्वपामि । या नः सबन्धुर्या नोऽसबन्धुर्निचखानेदमहं तान्बलगानुद्वपामि ॥ या नः सनाभिर्या नोऽसनाभिर्निचखानेदमहंतांन्बलगानुद्वपामि ॥ या नः स्वारणो निचखानेदमहं तान्बलगानुद्वपामि । राळसि विराळसि सम्राळसि सुरा-

ळसि गायत्रेण च्छन्दसाववाढो यन्द्विष्मः । त्रैष्टुभेनच्छन्दसा-
ववाढो यन्द्विष्मः जागतेन च्छन्दसाववाढो यन्द्विष्मः आनु-
ष्टुभेन च्छन्दसाववाढो यन्द्विष्मः पाङ्क्तेन च्छन्दसावगाढो
यन्द्विष्मः ॥ किमत्र भर्तुर्नौ सह निरस्तो वलगोववाढो
घूरसि रक्षोघ्नो बलगघ्नः प्रोक्षामि, वैष्णवान्‌रक्षोघ्नो बलग-
घ्नोऽवपिश्चामि । वैष्णवान्रक्षोघ्नो बलगघ्नोऽवस्तृणामि वै-
ष्णवौ रक्षोहणौ बलगहणौ प्रोक्षामि वैष्णवौ रक्षोहणौ
बलगहणौ उपदधामि । वैष्णवौ रक्षहणौ बलगहणौ
पर्यूहामि । वैष्णवं रक्षोहं त्वा बलगहं प्रोक्षामि, वैष्णवं
रक्षोहं त्वा बलगहं स्तृणामि, वैष्णवं रक्षोघ्नं बलगघ्नं
संवर्धयामि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यामादधे, इदमहं रक्षसो ग्रीवा अपि कृ-
न्तामि । इदमहं यो नः समानो योऽसमानोऽरातीयति
तस्य ग्रीवा अपि कृन्तामि । दिवे त्वाऽन्तरिक्षाय त्वा
पृथिव्यै त्वा शुन्धन्तां लोकाः पितृषदनाः । यवोसि

यावयास्मद्द्वेषं यावयारातिं पितृषदनन्त्वा लोकमास्तृणामि । द्यां स्तभानाऽन्तरिक्षं पृण दंहस्व पृथितानि तनस्त्वा मारुतो निहन्तु मित्रावरुणयोर्ध्रुवेण धर्मणा । ब्रह्मवनिं त्वा क्षत्र-वनिं देववनिं सजातवनिं रायस्पोषं पर्यूह्यामि । ब्रह्मदंह क्षत्रदंह प्रजादंह रायस्पोषंदंह । ऋतेन द्यावापृथिवी आपृणेथाम् । विश्वजनस्य च्छायासीन्द्रस्य स्यूरसीन्द्रस्य ध्रुवस्येन्द्रमसीन्द्राय त्वा ॥ परित्वा गर्वणो गिर इमा भ-वन्तो विश्वतः । वृद्धायुमऽनुवृद्धयो जुष्टा भवन्तु जुष्टयः ॥ विभूरसि प्रवाहणो वह्निरसि हविवाहनः श्वात्रोसि प्रचेतास्तुथोसि विश्ववेदा उशिगसि कविरङ्घारिरसि बम्भारिरवस्युरसि दुवस्वाञ्छुन्ध्युरसि मार्जलीयः सम्रा-ळसि कृशानुः परिषद्योस्याः स्ताव्यो नभोसि प्रतक्वा सम्मृष्टोसि हविस्सूदन ऋतधामासि स्वर्ज्योतिः समुद्रोसि वि-श्वव्यचा अजोस्येकपादहिरसि बुध्न्यः कव्योसि कव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिपृहि माग्ने नमस्ते अस्तु मा

मा हिंसीः ॥ ऋतुनारायणेभ्यः स्वाहा ॥१३॥ अनेन मन्त्रहोमेन पितुर्विष्णोः प्र० द्वि० विष्णुश्राद्धे ऋतुनारायणाः प्रीयन्तां प्रीताःसन्तु ॥ ॥ इति (ऋतुनारायणपर्याय) यजुर्वेदेबुधसूक्तम् ॥

## अथ विष्णुबलिः ।

तत्रादौ विष्णुबलौ प्रायश्चित्तविधिः ॥ प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तं विदुर्बुधाः ॥ जाम्बूनदस्य कालुष्यं परिशुद्ध्येद्यथाऽग्निना । अनाचारस्य मालिन्यं प्रायश्चित्ताग्निरादहेत् । सूतके मृतके चैव यज्ञाद्युद्यापने विधौ । विष्णुश्राद्धे प्रतिष्ठासु पञ्चगव्यं हि कारयेत् ॥ संक्रान्तौ रविवारे च शुभे जन्मदिने तथा । प्रायश्चित्ते विष्णुश्राद्धे पितृयज्ञे तथैव च । तथैव मातृकायागे समिद्धोमं न कारयेत् ॥

अथात्र निर्णयः ॥ शुक्ले षष्ठ्यां विष्णुपूजायुतं नक्तभोजनं सप्तम्यामुपवासः, अष्टम्यां प्रायश्चित्तं नवम्यां विष्णुक्रिया, दशम्यां विष्णुश्राद्धचतुष्कं, एकादश्यां विष्णुश्राद्धचतुष्कं, द्वा-

दश्यां च विष्णुश्राद्धपञ्चकं, त्रयोदश्यां प्रेतक्रिया प्रतिप्रेतमेकैकं पिण्डं, चतुर्दश्यां प्रतिप्रेतं दिनचतुष्कक्रिया पिण्डचतुष्कं आमश्राद्धद्वयं च पिण्डद्वयं गोभ्यो लवणं पूर्णिमायां दिनपञ्चकक्रिया पिण्डपञ्चकं आमश्राद्धद्वयं वपनं वस्त्रप्रक्षालनं च ॥ कृष्णप्रतिपदि षोडशश्राद्धात्मकं एकोद्दिष्टश्राद्धं, द्वितीयस्यां सपिण्डीकरणं, अमावस्यां भर्गश्राद्धम् इति शुक्लपक्षारम्भक्लृप्तिः ॥ कृष्णे तु द्वादश्यां नक्तभोजनं त्रयोदश्यामुपवासः चतुर्दश्यां प्रायश्चित्तम् ॥ अमावस्यां विष्णुक्रिया शुक्लप्रतिपदि विष्णुश्राद्धचतुष्कं द्वितीयस्यां च चतुष्कं, तृतीयस्यां पञ्चकं, चतुर्थ्यां एकदिनीयप्रेतक्रिया, पञ्चम्यां दिनचतुष्कप्रेतक्रिया आमश्राद्धद्वयं गोभ्योलवणश्राद्धं, षष्ठ्यां दिनपञ्चकप्रेतक्रिया आमश्राद्धद्वयं वपनं वस्त्रप्रक्षालनं च, सप्तम्यां एकोद्दिष्टसंज्ञं षोडशश्राद्धं, अष्टम्यां सपिण्डीकरणं । सहैवभर्गबलिश्चेत्स्यात्तदास्यामष्टम्यामेव सूर्यपूजायुतं नक्तभोजनं, नवम्यामुपवासः दशम्यां प्रायश्चित्तं, एकादश्यां भर्गक्रिया द्वादश्यां भर्गश्राद्धाख्यः सूर्यबलिः

त्रयोदश्यां कुशलहोमः ॥ नियमित[1]विष्णुश्राद्धदिनत्रये चेत् त्र्यह आगच्छति तदा दिनद्वयकार्यं विष्णुश्राद्धनवकं द्वितीयदिवस एव सम्पाद्यम्। चेत्त्रिस्पृक् आगछति तदा तृतीयदिवसे श्राद्धचतुष्कमेव पञ्चममेकं श्राद्धं चतुर्थदिवस एव कार्यं। नियमितविष्णुश्राद्धदिनत्रयं विना आदावन्ते वा चेत् त्र्यहस्त्रिस्पृक् आगच्छति तदा प्रारम्भसमाप्तदिवसेष्वेव न्यूनाधिकताकार्या ॥ चेद्विष्णुबलिर्मार्तण्[2]डभवने स्यात्तदा सूर्यादिभवानीभास्वत्यादिमण्डलपूजासह

---

१ नियम। जब नियम किये हुई विष्णुश्राद्ध दिनोमें कोई दिन कम जाई। तो दो दिनोंके कामयाने नौ श्राद्ध दूसरे दिनमेंही समाप्त करना। जब जियादा दिन आते तो तृतीयदिनकी काम भाट करना जैसा तिसरे दिन चार श्राद्ध और चौथमे दिन एकही करना ॥ जब आरम्भदिनोंमें या समाप्त दिनोंमें दिन वधे य बडे, तो उन दिनोंमें यथायोग्य कम यां अधिक बुद्धिसे दिन वधावना या बडवना ॥ २ जब मटनतीर्थमें विष्णुबलि हुवे, तो भवानीवगैरा देवों और सूर्यकी भी पूजाआदि करना। जब दूसरे तीर्थपर या घर वगैरा स्थानोंपर बलिविधान हुवे, तो सूर्य और देवोंकी भी पूजा वगैरा न करना यह भी नियम है ॥

स्थाप्या । अन्यप्रदेशेषु तां विनैव । इति क्रृप्तिः ॥ आदौ पञ्चगव्येन भूमिं स्वात्मानं च विशुद्ध्य ॥ शालिचूर्णेन ग्रहमण्डलं तद्दक्षिणतो विष्णुप्रतिमार्थं पद्ममुल्लिख्य क्षेत्रेशद्वयं च संस्थाप्य । स्वस्त्ययनं भद्रपाठादि वषट्कृतेविष्ण तावत् । प्रधानं । अग्नयेनमः, वायवेनमः, सूर्यायनमः ब्रह्मणे, प्रजापतये कूष्मार्षिभ्यो नमः ॥ ॐ तद्विष्णोः० । वासुदेवायनमः ८ (मार्त्तण्डभवने चेत्तदा) उद्वयन्तमसस्परि[१]—उदुत्यञ्जात[२]—तच्चक्षुर्देवहि[३]—हंसः शुचिषद्[४]—विभ्राड्बृहत्पिबतु[५] । सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः[६] । घृणिः सूर्यमादित्यमर्चयन्ति तपः सत्यं मधु क्षिरन्ति । तद्ब्रह्म तदापोज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोम् । हांहींसः सूर्यायनमः ॥ भवान्यैनमः भास्वत्यै भीमायै भर्गशिखायै योगीश्वर्यै विमलनागराजाय कमलना—गौतमना—चक्रसुतायै चाकाभगवत्यै १० महामार्तण्डदेवताभ्यः ॥ विष्णुपञ्चायतनदेवताभ्योनमः ॥ [illegible]—॥

यजमानमानीय ॥ अनाभौ० पुरुषसूक्तन्यासः । तीर्थे स्नेयं । वीरवीरेशदेवेश नमस्तेऽस्तु त्रिधात्मक । महामार्ताण्ड वरद सर्वाभयवरदप्रद । चाकाभगवत्यै गन्धादि । यत्रास्ति माता । महागणपतये–अग्नये ६ वासुदेवाय ८ (मार्तण्डे) ह्रांह्रींसःसूर्याय ८ भवान्यै भास्वत्यै १० विष्णुपञ्चायतनदेवताभ्यः ॥ इन्द्रादिभ्यः तेजसे चण्डाय धूपोनमः ॥ अपसव्येन । समस्तमाता । सव्येन । अद्य तावत्पित्रे विष्णवे समस्तप्रेतविष्णुभ्यः अतीतवर्तमानभविष्यत्स्वात्मनो दशविधपापनिष्कृत्त्यर्थं समस्तप्रेतविष्णूनां कुम्भीपाकादि असिपत्रवनान्तेभ्यः समस्तनरकेभ्यः समुद्धरणार्थं नारायणबलिविधानसङ्कल्पितप्रायश्चित्तहोमे धूपोनमः ॥ संवः सृजामि । अश्विनोः । देवस्य न्यासः । ॐभूःपुरुषमावाहयामि नमः ३ ॥ ॐभूर्भुवः स्वः ३ ॥ नमोस्त्वनन्ताय ३ ॥ वासुदेवायवि ३ ॥ जितन्ते ३ नमःकारण ३ ॥ विश्वरूपाय ३ ॥ नरसिंहाय ३ (मार्तण्डे) आदिदेवायवि–महामार्तण्डायधी–

तन्नः सूर्यः प्र ३॥ भास्करायवि ३॥ योगीशायवि-निष्कला-
यधी–तन्नः सूर्यः ३ ॥ सूर्यरूपायवि–सूर्यज्ञानायधी–तन्नः
सूर्यः ३॥ विश्वप्रकाशायवि–निष्कलासहितायधी–तन्नोम-
हामार्तण्डः प्र ३॥ नमोधर्मनिधानाय० ३॥ घृणिः सूर्यमा-
दित्य ३ ॥ अद्यतावत् भवानीभास्वतीभीमाभर्गशिखायो-
गीश्वरीविमलकमलगोतमनागराजचक्रस्तुतचाकाभगवती-
महामार्तण्डपादमूले तत्सन्निधौ च महागणपतेः अग्नेः ६
वासुदेवस्य ८ (मार्तण्डे) ह्रांह्रींसःसूर्यस्य ८ भवान्याः १०
वासुदेवादीनां इन्द्रस्य वज्रहस्तस्य० तेजसः चण्डस्य आत्म-
नो–पितुर्विष्णोः समस्तप्रेतविष्णूनां अतीत–प्रायश्चित्तहोमे
विष्णुपू- कलशपू–ग्रहमण्डलपू–क्षेत्रेश्वरपूजनमर्चामहं क-
रिष्ये । एवं पूजां विधाय दक्षिणामनु अक्षय्यं । अद्यतावत्
भवानीभा–आत्मनो–समस्तप्रेतविष्णूनां विष्णुसायुज्यार्थं
अतीत–कलशप्रीत्या तिलाम्भसा पुण्यवृद्धिरस्तु० एवं
विष्णुप्रीत्या–तेजश्चण्डप्रीत्या ।एता देवता। तद्विष्णोरिति
पुष्पद्वयम् ॥

अथाग्निकर्म । पात्रं तिला । अग्निं परिसमूह्य ९ परिस्तीर्य । आदौपञ्च । अग्निपूजा । अग्नये समनमत् । उत्तरतः । महागणपतये०—अग्नये ६ निर्वपामि एवं प्रोक्षामि ॥ इदं हविः । आज्यभागान्ते । कूष्माण्डहोमः ॥ आज्येन प्रधानं ॥ अग्नयेस्वाहा ६ । ततोऽन्नहोमः निषुसीद—प्रधानानि इन्द्रापर्वतः । एवं आज्यहोमः । तर्पणं अद्यतावत्—भवानी—आत्मनो प्रायश्चित्त—होमे महागणपतिः अन्नाज्याहुतिभिः प्रीयन्तां प्रीताः सन्तु ॥ आज्येन । पुरुषसूक्तहोमः । तर्पणम् । ततो यवतण्डुलहोमः । गायत्री ब्राह्मणं । तर्पणं । अध्वर्योयं—वषट् ते । ॐतद्विष्णोरिति विष्णोः प्रधानानि । तर्पणं (मार्तण्डे, उद्वयस्तमस ७ मार्तण्डब्राह्मणं—ह्रांह्रींसःसूर्याय । मलिम्लुचब्राह्मणं च । भवान्यै१० तर्पणं) । प्रायश्चित्तस्थानकं ॥ ७ ॥ तद्विष्णोः० । वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः ८ इन्द्रापर्वता । नवग्रहसूक्तानि । तर्पणम् । रुद्रपञ्चकं तर्पणं । देवीपञ्चकं तर्पणं । रक्षोघ्नमंत्राः तर्पणं । ऋततिथिः ।

इळामग्ने । अग्ने त्वं पारयानेतिच ॥ वैश्वानराय पावमान्य-ब्राह्मणेन चेत्युपस्थानम् । यद्देवा इत्यञ्जलिः । वैश्वानराय पावमानीब्राह्मणेन चेति तर्पणम् । हुतमेक्षणम् । आश्रावितं । विमुच्य । नयामि । वैश्वदेवादि पूर्ववत्कलशे विसर्जनं । आपन्नोसि ॥ इति विष्णुबलौ प्रायश्चित्तविधिः ॥

अथ विष्णुक्रियाविधिः ॥ आदौ शालिचूर्णेन ब्रह्म-कलशं तद्दक्षिणतो विष्णुप्रतिमाकलशं तद्दक्षे विष्णुकलशं तद्दक्षे यमवैवस्वतकलशं क्षेत्रेशद्वयं च संस्थाप्य ॥ अभिन्नोदेवी-वषट् ते विष्ण तावत् । प्रधानं ब्रह्मकलशे तद्विष्णोः० वासु-देवाय० ( मार्तण्डे उद्वयन्त ७ ह्रांह्रींसःसूर्यायनमः ८ भवान्यै १० ) विष्णुप्रतिमाकलशे । प्रतद्विष्णु । विष्णुकलशे वषट् ते । प्रतद्विष्णुः विष्णवेनमः । यमवैवस्वतकलशे । यमोदाधार पृथिवी । त्रिकद्रुकेभिः पतति षडुर्वीरेकमि-द्बृहत् । गायत्री त्रिष्टुप्छन्दांसि सर्वास्ता यम आहिता नमः ॥ यमवैवस्वताभ्यांनमः ॥ तद्विष्णो० विष्णुपश्चायत-

नदेवताभ्योनमः ॥ क्षेत्रस्य पतिना । ऐन्द्राग्नं ॥ यजमानमानीय ॥ पुरुषसूक्तन्यासः । तीर्थे स्नेयं । अद्यतावत् भवानी–महागणपतये वासुदेवाय ८ ह्रांह्रींसःसूर्याय ८ भवान्यै १० विष्णवे यमवैवस्वताभ्यां वासुदेवादिभ्यः ॥ तेजसे चण्डाय धूपोनमः ॥ अपसव्येन । समस्तमाता । सव्येन । अद्यतावत् भवानी–पित्रेविष्णवे–अतीतवर्तमानभविष्यत् स्वात्मनो दशविधपापनिष्कृत्यर्थं समस्तप्रेतविष्णूनां कुम्भीपाकादिअसिपत्रवनान्तेभ्यः समस्तनरकेभ्यः समुद्धरणार्थं नारायणबलिविधानसङ्कल्पितविष्णुक्रियाविधौ धूपोनमः । संवः सृजामि । अश्विनोः । अनाभौ । ॐ भूः पुरुषं ३ ॥ सर्वाविष्णुगायत्री (मार्तण्डे, आदिदेवायविद्महे ३ सर्वाः सूर्यगायत्री)। अद्यतावत् भवानी–महागणपतेः वासुदेवस्य ८ (मार्तण्डे, ह्रांह्रींसः सूर्यस्य ८ भवान्याः १०) वासुदेवस्य ८ विष्णोः ॥ यमवैवस्वतयोः । विष्णुपञ्चायतनदेवतानां । तेजसः चण्डस्य

आत्मनो पितुर्विष्णोः—अतीतवर्त—अगम्यगमनादीन्द्रियवैक-ल्योत्थैनसो निवृत्त्यर्थं उद्बन्धनविषशस्त्राग्निविद्युत्सर्पदंष्ट्रितु-रुष्कचण्डालादिहतत्वदोषाऽव्रतहतत्वादिदोषजनितनानाविधनरक-पातिनां समुद्धरणार्थं नारायणबलिविधानसङ्कल्पितविष्णुक्रिया-विधौ कलशपूजनं विष्णुप्रतिमापू० विष्णुकलशपू० यमवै-वस्वतक—विष्णुपञ्चायतनपू० क्षेत्रेश्वरपूजनमर्चामहं । दक्षि-णान्तं ततोऽक्षय्यं । भगवन्भवतः सृष्टिस्थितिसंहारकारक । भक्तिमात्रोपरोधस्य विष्णोरक्षय्यमस्त्विदम् १ जीवभूत जगद्योने ह्यन्नमूर्ते जनार्दन । आभूतसंप्लवं यावद्विष्णो-रक्षय्यमस्त्विदम् २ अद्यतावत् आत्मनो पितुर्विष्णोः—विष्णु-क्रियाविधौ कलशप्रीत्या—स्वर्गप्राप्तिरस्तु ॥ एवं क्रमेण । भग-वन् भवतः—विष्णुप्रतिमाप्रीत्या०—। विष्णुकलशप्रीत्या—। यमकलशे तु । कीनाशस्य च प्रीत्यर्थं मायया सहितस्य च । यमस्य धर्मराजस्य याममक्षय्यमस्त्विदम् । अद्यतावत् भवानी—यमवैवस्वतप्रीत्या यमवैवस्वतौ प्रीयेतां प्रीतौ मे

भवेताम् ॥ क्षेत्रेश्वरप्रीत्या—। एतादेवता ॥ कलशेषु पुष्पाणि । तद्विष्णोः । प्रतद्विष्णु । वषट् ते । यमो दाधार । त्रिकद्रुकेभि ॥ तदनु वैश्वदेवादि । अग्नये स्विष्टकृते तावत् । ब्राह्मणपूजनं । ॐ भूः पुरुषमित्यादि दक्षिणान्तं । क्षेत्रेशबलिः ॥ विष्णुप्रतिमाविष्णुयमवैवस्वतकलशानां विसर्जनं । क्षमापुष्पाणि । ध्येयः सदा । विष्णुकलशे । नास्ति विष्णुसमो देवो नास्ति विष्णुसमः प्रभुः । नास्ति विष्णुसमः कश्चिन्महानरकमोचकः ॥ यमकलशे । यमो वैवस्वतो नाम प्रेतलोके महाबलः । पायादमुं च दातारं प्रेतमुक्तिं करोतु सः । आह्वानं । नमोब्रह्मणे । तत्रादौ विष्णुकलशदानं । सावित्राणि अद्यतावत् भवानी—आत्मनो—पितुर्विष्णोः अतीत—विष्णुकलशं ददानि ३ ॥ एवं यमब्राह्मणाय यमकलशदानं । ततो होत्रे विष्णुप्रतिमादानं । तदन्वऽक्षयसाधनं । भगवन्भवं[1]—। जीवभूतं[2]—अद्यतावत् भवानी—आत्मनो—पितुर्विष्णोः—विष्णुकलशप्री—। एवं विष्णुप्री—॥

एवं कीनाशस्यच प्रीत्यर्थं–। अद्यतावत् यमवैवस्वतप्री–॥ ब्राह्मणविसर्जनं । ॐभूःपुरुषं विसर्जयामि नमः ३। अग्नयेस्विष्टकृते स्वाहा। विमुच्य ।नयामि। धर्मं देहि।गोग्रासादि ॥ कलशंस्पृष्ट्वा। ॐ भूः पुरुषं विसर्जयामि नमः ३ विष्णुगायत्री भास्करगायत्रीश्च सर्वाः। अद्यतावत् भवानी–महागणपतेः वासुदेवस्य ८ ह्रांह्रींसःसूर्यस्य ८ भवान्याः भास्वत्याः १० वासुदेवादीनां तेजसः चण्डस्य आत्मनो–पितुर्विष्णोः अतीत–नारायणबलिविधानसङ्कल्पितविष्णु-क्रियाविधौ कलशपूजनं क्षेत्रेशपूजनमच्छिद्रं ॥ यवोदकं। आपन्नोसि ॥ नमो ब्रह्मणे। उदकलशं। मन्त्रार्थाः ॥ इति तदनु दशपिण्डक्रियार्थं नदीतीरेऽन्यत्र व्रजेत्॥ तत्र यथा दक्षिणाभिमुखः सदर्भकाण्डद्वयहस्तो विष्णुरूपं प्रेतं ध्यात्वा "स्योना पृथिवी"त्यादि पृष्ठे ७३ पंक्ति १४ दशर्चः पठित्वा तिलोदकं दद्यात्॥ स्योना पृथिवी ॥ अतो देवा ॥ इदं विष्णुः ॥ त्रीणि पदा ॥ विष्णोः कर्माणि ॥ तद्विष्णोः ॥ तद्विप्रासो ॥ यस्य

कोष्ट जगतः पार्थिवस्यैकाय इद्वशी। यमं भङ्गश्रवोगाय यो राजानपरोर्ग्याः ॥ यमं गायभङ्गश्रवो यो राजान परोद्याः। येनापो नद्यो धन्वानि येन द्यौ पृथिवी दशे ॥ हिरण्यकेशान्मधुरान्हिरण्या काणग्रा शफान्। अश्वावनस्य तं दानं यमोराजाधितिष्ठति ॥ अद्यतावत् भवानी–पित्रे विष्णवे प्रथमेऽहनि १-२-३-४-५-६-७-८-९ दशमेऽहनि एष ते एतौ वां तिलोदका वा, एते वः तिलोदकतिलोदकाञ्जलिः–बहुपुञ्जली ञ्जलयः नमः ॥ तीर्थे स्नेयं। वीरवीरेश–। चाकाभगवत्यै–। यत्रास्ति अद्यतावत् भवानी–पित्रेविष्णवे प्रथमे वा एष वो धूपो नमः। दक्षिणाग्रान्दर्भानास्तीर्य ॥ पित्रे विष्णवे प्रथमे–२-३-४-५-६-७-८-९ दशमेऽहनि भूपृष्टे अवनेजनं नमः। सव्यं जानुं भूमौ निधाय। तिलास्तोयं। ॐ भूः पुरुषमावाहयामि नमः ३ सर्वा विष्णुगायत्रीः, सूर्यगायत्रीश्च अद्यतावत् भवानी–पितः विष्णो प्रथमेऽहनि प्रेतयमव्यापिन् एष ते प्रेतविष्णुपिण्डो नमः अपउप-

स्पृश्य । एवं विष्णुसूर्यगायत्रीः अद्यतावत् भवानी-पितः विष्णो द्वितीयेऽहनि वासुदेवधर्मराट्व्यापिन् एष ते प्रेतविष्णु-२ । तृतीयेऽहनि नारायणमृतव्यापिन् एष ते ३ । चतुर्थेहनि शिववैवस्वतव्यापिन् एष ते ४। पञ्चमेहनि यमकालव्यापिन् एष ते प्रे-५ । षष्ठेहनि भवान्तकव्यापिन् एष ६। सप्तमेहनि व्याधिरूपसर्वप्राण-हरव्यापिन् ए-७ । अष्टमेऽहनि व्योमपरमेष्ठिव्यापिन् ८ । नवमेहनि ब्रह्मप्रजापतिव्या-९ । ॐ भूः पुरुषमा-अद्यता-भवानी-पितः विष्णो दशमेहनि रुद्रचित्रगुप्तव्या-पिन् एष ते प्रेतविष्णुपिण्डो नमः अप उ-।। वासो नमः। वीरान्नं नमः पिण्डलेपं निवार्य । पित्रे विष्णवे प्रथमे वा द-शमेऽहनि समालभतं गन्धो नमः अर्घो नमः पुष्पं नमः धूपो नमः, दीपो नमः एष वो भक्ष्यभोज्यफलमूलबलिं नमः । पित्रे विष्णवे प्रथमे-तिलमधुमिश्रमुदकपात्रमाच-मनीयं नमः ।। पित्रे एतत् वो हिमपानादि नमः ।। तद्विष्णोः

पुष्पद्वयं। तदनु वामाङ्गुष्ठे विष्टरंनिधाय। अद्यतावत्–भवानी–पितर्विष्णो प्रथमेहनि प्रेतयमव्यापिन् विष्णुप्रकृतिशरीरसाधनाय चाकानदीप्रवाहे अयं पिण्डोस्तु पूरकः। प्रथमेऽहनि प्रथमस्तिलोदकुम्भोनमः। प्रथमेऽहनि प्रथमस्तिलोदकाञ्जलिर्नमः॥ एवं अद्यतावत्–द्वितीयेहनि वासुदेवयमराट्व्यापिन् विष्णुप्रकृतिशरीरसा–पूरकः। द्वितीयेऽहनि प्रथमस्तिलोदकुम्भोनमः। द्वितीयेऽहनि द्वितीयस्तिलोदकुम्भोनमः॥ द्वितीयेऽहनि प्रथमस्तिलोदकाञ्जलिर्नमः। द्वितीयेऽहनि द्वितीयस्तिलोदकाञ्जलिर्नमः॥ (एवं दिनवृद्ध्यातिलोदकाञ्जलितिलोदकुम्भानां वृद्धिः कार्या। अद्यतावत् तृतीयेहनि–नारायणमृतव्यापिन् विष्णु०। एवं क्रमेण दशपिण्डाञ्जलमध्येक्षिपेत्। पञ्चपञ्चाशत्तिलोदकुम्भतिलोदकाञ्जलीश्च प्रक्षिपेत्॥ ततो विष्णुकुम्भं पुरः संस्थाप्य (अत्रैकवचनेन क्रिया) प्रथमेहनि। प्रेतविष्णो अत्र स्नाहि, अपः पिब, प्रेतविष्णो मधु लीढि, तिलान्भुंक्ष्व, प्रेतविष्णोऽन्न-

मद्धि, प्रेतविष्णोसर्पिर्भज, प्रेतविष्णो गुडशर्करादिफलमूलद्राक्षादि भुंक्ष्व ॥ द्विवचने । प्रथमे–प्रेतौ विष्णू अत्र स्नातं, अपः पिबतं, मधु लीढं, तिलान्भुञ्जेथां, अन्नमत्तं, सर्पिर्भजेथां, गुडशर्करादिफलमूलद्राक्षादि भुञ्जेथां ॥ बहुवचने । प्रथमे–प्रेताः विष्णवः अत्र स्नात, अपः पिबत, मधु लीढ, तिलान् भुंग्ध्वं अन्नमत्त, सर्पिः भजध्वं, गुडशर्करादिफलमूलद्राक्षादि भुङ्ग्ध्वं, एवं प्रथमे–गन्धो नमः अर्घो नमः पुष्पं नमः, धूपो नमः, वासो नमः, माल्यं नमः (मालास्थाने पुष्पं) अद्यतावत् भवानी–पितुर्विष्णोः समस्त–प्रथमेहनि–विष्णुलोकप्राप्त्यर्थं एष विष्णुकुम्भोऽहोरात्रं तृप्तयेऽस्तु । ततः स्नात्वा विष्णुकुम्भक्षेपः । इदं पुरुषशार्दूला विमलं दिव्यमुत्तमम् । विष्णुलोके सुपानीयं प्रेता अत्र स्नात, अपः पिबत इति क्षेपणमन्त्रः ॥ प्रत्यग्ने हरसाहरं (इत्यारात्रिका) । तिलकं कृत्वा । ऐन्द्राग्नमितितिलहोमः । तर्पणम् । तीर्थं प्रणमेत् ॥ दीपं दद्यादहोरात्रं

तीर्थस्याग्रे तिलतैलतः । अत्राहोरात्रमशौचम् ॥ नात्र सोद-कुम्भः आमश्राद्धश्च ॥ इति विष्णुक्रियाविधिः ॥

अथ विष्णुश्राद्धविधिः ॥ शुक्ले दशम्यां कृष्णे तु प्र-तिपदि प्रातरुत्थाय पञ्चगव्येन भूमिशोधनं स्वात्मशोधनं च कृत्वा गोभ्यो लवणं दत्वा यथाविधि कर्म कार्यम् ॥ आदौ शालिचूर्णेन ग्रहमण्डलमुल्लिख्य तद्दक्षिणतो विष्णुप्रतिमापद्मं तद्दक्षे कारणचतुष्टयपद्मानि ४ । तद्दक्षे यथाप्रेतसंख्यं प्रेतकल-शपद्मानि कारणचतुष्टयाधःस्थाने ऋतुनारायणचतुष्टयपद्मानि तद्दक्षे कलशसहितानि वेदचतुष्टयपद्मानि क्षेत्रेशद्वयं च संस्थाप्य अग्निनो देवी–वषट्तेविष्ण तावत् । प्रधानानि ॥ आदौ ग्रह-कलशे अग्नयेनमः ६ उद्वयन्तमसस्परि ॥ ७ हांह्रींसः सूर्या-यनमः ८ भवान्यैनमः १० विष्णुप्रतिमायां तद्विष्णोः० वासुदेवाय ८ । विष्णुकारणकलशे । ( दीर्घतपसः औशिक्याः वत्सस्य काण्वायणस्य त्रिष्टुप्विष्णुः ) प्रतद्विष्णुः० । ब्रह्मका-रणे ( शतर्चिनो गोतमस्य ब्रह्मणस्त्रिष्टुप्ब्रह्मा ) ब्रह्मा देवानां० ।

शिवकारणकलशे (दृशायणस्य भार्गवस्यानुष्टुप्‌शिवः) शिवो भूत्वा मह्यमग्नेथोसीदशिवस्त्वम् । शिवः कृत्वा दिशः सर्वाः स्वंयोनिमिहासदः नमः । यमकारणे (देवानां ब्रह्मणोनुष्टुप्यमः । यमो दाधार पृथिवीं० । यथाप्रेतसंख्यं । प्रेतकलशेषु । आहन्पितॄन्सुविदत्रा ॥ तदनु ऋतुनारायणकलशेषु (प्रत्येकम्) (दीर्घतपोवत्सस्य काण्वायणस्य त्रिष्टुप्‌विष्णुः) वषट्ते-विष्ण० वेदचतुष्टयकलशेषु । योरुद्रो अग्नौ० अग्निमीळे । इषेत्वोर्जे । अग्नआयाहि । शन्नोदेवी । विष्णुपञ्चायतनदेवताभ्यः नमः । इन्द्रा पर्वता । ऐन्द्राग्नं । अर्चन्तस्त्वा ॥ अथ पूजा ॥ यजमानमानीय ॥ आसनशोधनादि ॥ अनाभौ पुरुषसूक्तेन च न्यासः । तद्विष्णोः ॥ तीर्थे स्नेयं । वीर वीरेशदेवेश नमस्तेऽस्तु त्रिधात्मक । महामार्तण्ड वरद सर्वाभयवरप्रद । चाकाभगवत्यै गन्धादि । यत्रास्तिमाता । अद्यतावत् महागणपतये । अग्नये वायवे ६ ह्रांह्रींसः सूर्याय ८ भवान्यै १० वासुदेवाय ८ (पृथ्वीरूपायविष्णवे), "मार्ग-

शीर्षे" श्रीसहि० केशवाय। "पौषे" वागीश्वरी स० नारायणाय। "माघे" कान्तास० माधवाय। "फाल्गुने" क्रिया० गोविन्दाय। "चैत्रे" शक्तिस० विष्णवे। "वैशाखे" विभूतिस० मधुसूदनाय। "ज्येष्ठे" इच्छास० त्रिविक्रमाय। "आषाढे" प्रीति० वामनाय। "श्रावणे" रतिस० श्रीधराय। "भाद्रपदे" माया० हृषीकेशाय। "आश्वियुजे" धीस० पद्मनाभाय। "कार्तिके" महिमास० दामोदराय "मलिम्लुचे" सत्यभामास० नरकारये ॥ (अब्रूपाय ब्रह्मणे), "मार्गशीर्षे" गायत्रीस० ब्रह्मणे। "पौषे" शक्तिस० पितामहाय। "माघे" वेदमातृस० स्रष्ट्रे "फाल्गुने" पतिव्रतास० पद्मनाभाय। "चैत्रे" ब्रह्माणीस० हिरण्यगर्भाय। "वैशाखे" विश्वात्मास० चतुर्मुखाय। "ज्यैष्ठे" आदिपतीस० लोकेशाय। "आषाढे" सृष्टिस० पद्मजन्मने। "श्रावणे" विधात्रीस० विधात्रे। "भाद्रपदे" धात्रीस० प्रजापतये। "आश्वयुजे" समाहितास० सुरज्येष्ठाय।

"कार्तिके" ब्राह्मीस० परमेष्ठिने । "मलिम्लुचे" सत्यभामास० नरकारये ॥ (तेजोरूपायशिवाय), "मार्गशीर्षे" गौरीस० शिवाय। "पौषे" कात्यायनीस० रुद्राय। "माघे" दुर्गास० वृषाकपये। "फाल्गुने" उमास० त्रिनेत्राय। "चैत्रे" शिवास० वृषभवाहनाय। "वैशाखे" अम्बिका० त्र्यम्बकाय। "ज्यैष्ठे" शर्वाणीस० महादेवाय। "आषाढे" योगीश्वरीस० उमापतये। "श्रावणे" पार्वतीस० हराय। "भाद्रपदे" रुद्राणीस० श्रीकण्ठाय। "आश्वयुजे" भवानीस० भवाय। "कार्तिके" महायोगीश्वरीस० ईशानाय। "मलिम्लुचे" सत्यभामास० नरकारये ॥ (वायुरूपाययमाय), "मार्गशीर्षे" यमीस० धर्मराजाय। "पौषे" यामीस० पितृपतये। "माघे" कालपत्नीस० यमाय। "फाल्गुने" मृत्युकीस० वैवस्वताय। "चैत्रे" अन्तकीस० दण्डधारिणे। "वैशाखे" भयङ्करीस० अन्तकाय। "ज्यैष्ठे" ऊर्ध्वकेशीस० श्राद्धदेवाय। "आषाढे" तमीस० कालाय।

"श्रावणे" धूम्रीस० परेतराजाय। "भाद्रपदे" लोकसंहारिणीस० महिषस्थाय। "आश्वयुजे" च्छिद्रिणीस० कीनाशाय। "कार्तिके" मोहिनीस० कृतान्ताय। "मलिम्लुचे" सत्यभामास० नरकारये॥ आकाशाऽऽकृतिशून्यरूपप्रेतविष्णुभ्यः। (ऋतुनारायणेभ्यः।) "मार्गशीर्षे" रुक्मिणीसहिताय कृष्णाय, श्रीस० केशवाय। "पौषे" प्रियास० अनन्ताय, वागीश्वरीस० नारायणाय। "माघे" प्रीतिस० अच्युताय, कान्तास० माधवाय। "फाल्गुने" शक्तिस० चक्रिणे, क्रियास० गोविन्दाय। "चैत्रे" सिद्धिस० वैकुण्ठाय, मतिस० विष्णवे "वैशाखे" शोभास० जनार्दनाय, विभूतिस० मधुसूदनाय॥ "ज्यैष्ठे" महिमास० उपेन्द्राय, इच्छास० त्रिविक्रमाय। "आषाढे" लक्ष्मीस० यज्ञपुरुषाय धृतिस० वामनाय। "श्रावणे" कान्तिस० वासुदेवाय, रति स० श्रीधराय। "भाद्रपदे" प्राप्तिस० हरये, मायास० हृषीकेशाय।

"आश्वयुजे" प्राकाम्यास० योगीश्वराय, धीस० पद्मनाभाय। "कार्तिके" लघिमास० पुण्डरीकाक्षाय, गरिमास० दामोदराय । "मलिम्लुचे" शक्तिस० योगीश्वराय, सत्यभामाम० नरकारये,निष्कलास० महामार्तण्डाय। चातुर्वेदेश्वरेभ्यः। विष्णुपञ्चायतनदेवताभ्यः इन्द्रादिभ्यः तेजसे चण्डाय एवं प्रथमे २,३,४,५,६,७,८,९,१०,११,१२, त्रयोदशे विष्णुश्राद्धेदीपोनमः ॥ अपसव्येन । समस्तमातापितृभ्यः दीपः स्वधा । सव्येन । (यस्मिन्[1]मासे बलिविधानारम्भः स्यात्तं त्यक्त्वा द्वितीयमासमारभ्यातीतपदेनोच्चार्या एकादशमासाः ॥ द्वादशश्च मलमास उच्चार्यः । पश्चात्त्रयोदशमोमासो-

१ जिस मास में विष्णुबलि का आरम्भ हो, वह मास छोड कर दूसरे मास से 'अतीत' पदसे उच्चार याराह मासोंका करना बारमा मलमास उच्चारणा । तेरमा आरम्भ मास 'अद्य' पदसे उच्चारणा । जैसा इस उदाहरण में आचार्य ने वैशाख आरम्भ मास रखकर जैठ मास 'अतीत' पद से उच्चार किया ॥ जब मलमास मेंही आरम्भ होवे, तब वही "अद्य" पदसे उच्चार करना यह नियम है ॥

वर्तमानमासो "अद्य" इत्यनेनपदेनोच्चार्यः। यथात्र वैशाखमासेऽयमारम्भो नियम्योदाहृतं। चेन्मल एवारम्भः स्यात्तदा स एव वर्तमानशब्देनोच्चार्य इति नियमः ॥) अतीतज्यैष्ठशुक्लद्वादशीभूत्वा "दशम्यां" वा "प्रतिपदि" इच्छासहितस्य त्रिविक्रमस्य प्रीत्यर्थं एवं द्वादशमासानुच्चार्य अद्य वैशाखशुक्लद्वादशीभूत्वा दशम्यां विभूतिसहितस्य मधुसूदनस्य प्रीत्यर्थं। अद्यतावत्। पित्रे विष्णवे समस्तप्रेतविष्णुभ्यः, अतीतवर्तमानभविष्यत्स्वात्मनो दशविधपापनिष्कृत्यर्थं कुम्भीपाकादि–असिपत्रवनान्तेभ्यः समस्तनरकेभ्यः समुद्धरणार्थं नारायणबलिविधानसङ्कल्पिते प्रथमे २, ३,४, एवं त्रयोदशे विष्णुश्राद्धे धूपोनमः ॥ संव्वः सृजामि। अश्विनोः। देवस्यन्यासः। ॐभूः पुरुषमावा ३ ॐभूर्भुवःस्वः ३ नमोस्त्वनन्ताय ३ वासुदेवायवि ३ जितन्ते ३ नमः कारण ३ सर्वा विष्णुसूर्यगायत्रीः। आदिदेवायवि ३ भास्करायवि ३ योगीशायवि ३ विश्वप्रका ३ सूर्यरू ३ नमोधर्म ३

घृणिः सूर्य २ [पृ.८५पं.१५] अतीतज्यैष्ठशुक्लद्वादशी-भूत्वा "दशम्यां" वा "प्रतिपदि" एवं द्वादशमासानु-च्चार्य तत्सद्ब्रह्माद्यतावत् ॥ एवं ॥ अद्य वैशाखशुक्लद्वाद-शीभूत्वा दशम्यां विभूतिसहितस्य मधुसूदनस्य प्रीत्यर्थं तत्सद्ब्रह्माऽद्यतावत्–भवानीभास्वतीभर्गशिखा–तत्सन्निधौ च महागणपतेः । अग्नेः ६ वासुदेवस्य ७ ह्रांह्रींसःसूर्यस्य ८ भवान्याः १० पृथ्वीरूपस्यविष्णोः, अब्रूपस्यब्रह्मणः, तेजोरूपस्यशिवस्य, वायुरूपस्ययमस्य, आकाशाकृतिशून्य-रूपप्रेतविष्णूनां ऋतुनारायणानां चातुर्वेदेश्वराणां विष्णु-पञ्चायतनदेवतानां इन्द्रादीनां तेजसः चण्डस्य आत्मनः पितुर्विष्णोः समस्तप्रे० अतीतवर्तमानभविष्यत्स्वात्मनो द-शविधपापनिष्कृत्यर्थं कुम्भीपाकादिअसिपत्रवनान्तेभ्यःस-मस्तनरकेभ्यः समुद्धरणार्थं नारायणबलिविधानसङ्कल्पिते प्रथमे द्वि वा त्रयोदशे विष्णुश्राद्धे कलशपूजनं ग्रहमण्डल-पूजनं विष्णुप्रतिमापू० कारणकलशचतुष्टयपूजनं कलना-

रायणपू० चातुर्वेदेश्वरपूजनं क्षेत्रेशपूजनमर्चामऽहं करिष्ये ॐ कुरुष्व । तिलसर्षपयवान्विकीर्य । पुरुष एवेदं । ध्रुवाद्यौ-रित्येवं षष्ठ्याऽऽसनम् । महागणपतेः इदमासनं नमः । अग्नेः ६ वासुदेवस्य ८ ह्रांह्रींसः सूर्यस्य ८ भवान्याः १० पृथिवीरू-पस्य विष्णोः १३ अब्रूपस्य ब्रह्मणः १३ तेजोरूपस्यशिवस्य १३ वायुरूपस्ययमस्य १३ आकाशाकृतिशून्यरूपस्य पितुः विष्णोः प्रथमे विष्णुश्राद्धे इदमासनं नमः ऋतुनारा-यणानां चातुर्वेदेश्वराणां पञ्चायतनदेवतानां इन्द्रादीनां तेजसः चण्डस्य इदमासनं नमः ॥ महागणपतये । अग्नये ६ वासुदेवाय ८ ह्रांह्रींसः सूर्याय ८ भवान्यै १० पृथ्वी-रूपाय विष्णवे[१३], अब्रूपायब्रह्मणे[१३], तेजोरूपायशिवाय[१३], वा-युरूपाययमाय[१३], आकाशाकृतिशून्यरूपाय पित्रे विष्णवे, ऋतुनारायणेभ्यः[४] रुद्रायसानुचराय पृथिव्यै अग्नये० विष्णुपञ्चायतनदेवताभ्यः इन्द्रायवज्रहस्ताय तेजसे चण्डाय पुष्पासनं समर्पयामि ॐ पूजय ॥ सहस्रशीर्षा । युञ्जते

मन उत० ॥ महागणपतिं । अग्निं वायुं । वासुदेवं । ह्रांह्रींसःसूर्यं । भवानीं भास्वंतीं । पृथिवीरूपंविष्णुं, अब्रूपं ब्रह्माणं, तेजोरूपंशिवं, वायुरूपं यमं, आकाशाकृतिशून्यरूपान् प्रेतविष्णून्, ऋतुनारायणान्, रुद्रं सानुचरं, पृथिवीं अग्निं ऋग्वेदं० विष्णुपञ्चायतनदेवताः इन्द्रं वज्रहस्तं तेजसं चण्डं आवाहयिष्यामि ॐ आवाहय ॥ आवाहयाम्यमरवृन्दनुताङ्घ्रियुग्मं० ॥ तदनुविष्णुकारणे ॥ शब्दादिपञ्चकगुणं ह्यचलो बिभर्षि विश्वं चराचरमखण्डितविक्रमस्त्वम् । आवाहितो मखमुखेऽच्युत प्रेतमुक्त्यै विश्वम्भरात्र भगवन्कुरु सन्निधानम् ॥ शंखचक्रगदापद्मपाणे गरुडवाहन । आगच्छागच्छ देवेश पितृन्सन्तारयाम्यहम् ॥ अथ ब्रह्मकारणे ॥ रक्तः कमण्डलुकुशाम्बुजदण्डपाणिः स्रष्टाम्बुजासनगतश्चतुराननस्त्वम् । वेदाम्बिकाङ्कितविरिञ्चकरूपधारिन्नावाहितोऽसि भगवन्कुरु सन्निधानम् ॥ मुखाधस्य तु सञ्जातो अग्निर्देवाय

ब्राह्मणाः । जगत्सृष्टिकरं देवमजमावाहयाम्यहम् ॥ पठन्वेदांश्च सांगांस्त्वं बीजरूप प्रजापते । एहि त्वं सन्निधानेन पितॄन्सन्तारयाम्यहम् ॥ शिवकारणे ॥ रुद्रो वृषासनगतः सुसितः पिनाकी खट्वाङ्गशूलपरशून्दधदम्भ्रिकेशः । गङ्गाधरस्त्रिनयनः शशिखण्डचूडः साक्षात्करोतु भगवानिह सन्निधानम् ॥ आगच्छागच्छ देवेश तेजोमूर्ते वृषाकपे । शम्भो त्वत्सन्निधानेन पितॄन्सन्तारयाम्यहम् ॥ त्रिनेत्रं भैरवाकारं पूजितं च सुरासुरैः । उत्पत्तिस्थितिसंहारकरमावाहयाम्यहम् ॥ यमकारणे ॥ सत्योऽसि भक्तिवति वर्धितभूरिसौख्य प्रेताधिनाथ कृपया मम जीवितेश । एह्येहि भो महिषवाहन वायुरूप पूजां गृहाण भगवन्निह प्रेतमुक्त्यै ॥ कृतान्तं महिषारूढं दण्डहस्तं भयानकम् । कालपाशधरं कालं ध्याये दक्षिणदिक्पतिम् ॥ आवाहितोऽसि प्रेतेश प्रेतान्सन्तारयाम्यहम् । आगत्य कृपयेहाद्य सन्निधानं कुरु मम्भो । प्रेतकारणे ॥ आवा-

हिता मखमुखे भवदर्थमद्य नारायणादय इमे खलु कारणेशाः । उत्तारणाय भवतो नरकात्सुघोरात्त्वं चैहि प्रेत गगनाकृतिशून्यरूपः ॥ भगवन्पुण्डरीकाक्ष० । यवान्विकीर्य । प्राणायामः ॥ शन्नोदेवी । लाजाश्च । एतावानस्य । हिरण्यवर्णाः ॥ वासुदेवार्घ पाद्यंनमः । महागणपतये । अग्नये । ह्रांह्रींसःसूर्याय । भवान्यै भास्वत्यै । पृथिवीरूपायविष्णवे, अब्रूपायब्रह्मणे, तेजोरूपायशिवाय, वायुरूपाययमाय, आकाशाकृतिशून्यरूपेभ्यःप्रेतविष्णुभ्यः । ऋतुनारायणेभ्यः । रुद्रायसानुचराय पृथिव्यै अग्नये० । विष्णुपंचायतनदेवताभ्यः इन्द्रादिभ्यः । तेजसे चण्डाय पाद्यंनमः ॥ शेषंनिवार्य । पुनः ॥ शन्नोदेवी । आपःक्षीरं त्रिपादूर्ध्व । आपो हिष्ठा । भगवन् वासुदेव । महागणपते । अग्ने वायो । ह्रांह्रींसःसूर्य ८ । भवानि भास्वति । पृथ्वीरूपविष्णो, अब्रूपब्रह्मन्, तेजोरूपशिव, वायुरूपयम, आकाशाकृतिशून्यरूपाः प्रेतविष्णवः । ऋतुनारा-

यणाः। रुद्रसानुचर पृथिवि अग्ने ऋग्वेद ब्रह्मन् छन्दांसि। विष्णुपञ्चायतनदेवताः इन्द्र वज्रहस्त। तेजः चण्ड इदं वोऽर्घ्यं नमः॥ एवं विष्णुपूजनं श्लोकतर्पणसहितं दक्षिणान्तं कृत्वाऽक्षय्यसाधनम्॥ अद्यतावत् भवानी० तत्पादमूले च समस्तमातापितॄणां स्वर्गप्राप्त्यर्थं कलशप्रीत्या तिला०॥ ततो विष्णुप्रतिमायां॥ भगवन्भवतः सृष्टिं० (पृ ९० पं ७)। जीवभूतं० अद्यतावत् भवानी० आत्मनो० पितुर्विष्णोः समस्तप्रेतविष्णूनां अतीतवर्तमान० (पृ ८९ पं ६) नारायणबलिविधानसङ्कल्पिते प्रथमे, द्वितीये, तृतीये, चतुर्थे विष्णुश्राद्धे विष्णुप्रीत्या०॥ एवं कलशप्रीत्या०॥ विष्णुकारणे। भगवन्भ० (पृ ९० पं ७) जीवभूत०। अद्यतावत् भवानी० आत्मनो० पितुर्विष्णोः, समस्तप्रेत०। अतीतव०। प्र, द्वि, तृ, चतुर्थे विष्णुश्राद्धे भगवतः पृथ्वीरूपस्य विष्णोः ४ प्रीत्या० पृथ्वीरूपोविष्णुः प्रीयतां प्रीतोस्तु॥ ततो ब्रह्मकारणे। पञ्च-[illegible] सहितस्य च। [illegible] सुरश्रेष्ठस्य

ब्राह्मम ऽक्षय्यमस्त्विदम् ॥ अद्यतावत्० अब्रूपोब्रह्मा प्री० ॥ ततो शिवकारणे ॥ श्रीकण्ठस्य च प्रीत्यर्थं भवान्या सहितस्य च । त्र्यम्बकस्य त्रिनेत्रस्य शैवमक्षय्यमस्त्विदम् ॥ अद्यतावत्० तेजोरूपः शिवः प्री० ॥ ततो यमकलशे ॥ कीनाशस्य च प्रीत्यर्थं मायया सहितस्य च । यमस्य धर्मराजस्य याममऽक्षय्यमस्त्विदम् ॥ सखड्गचर्मकवचं सर्वाभरणभूषितम् । धर्मराजमुपास्येऽहं याममऽक्षय्यमस्त्विदम् ॥ अद्यतावत्० वायुरूपः यमः प्रीयतां प्रीतोऽस्तु ॥ ततो प्रेतकलशेषु यथाप्रेतसंख्यम् ॥ प्रेतस्य शून्यरूपस्य क्षुधातृष्णाहतस्य च । कुम्भीपाकोपतप्तस्य तृप्त्यर्थमिदमक्षय्यम् ॥ पितॄणां तारणार्थाय स्वात्मनः पुण्यवृद्धये । सर्वभूतहितार्थाय प्रैतमऽक्षय्यमस्त्विदम् ॥ अद्यतावत्० भवानीभा० तत्पादमूले च आत्मनो पितुर्विष्णोः समस्त० अतीतव० प्र० द्वि० तृ० चतुर्थे एवं त्रयोदशे विष्णुश्राद्धे प्रेतरूपविष्णुप्रीत्यर्थं प्रेतरूपो विष्णुः प्रीयतां प्रीतोऽस्तु ॥ अथ [illegible]

कलशेषु। भगवन्भूतं[1]० (पृ ९० प ७)। जीवभूत जगद्योने[2]०। अद्यतावत्० भवानी० आत्मनो० पितुर्विष्णोः समस्त० अतीत० प्र, द्वि, तृ, च० विष्णुश्राद्धे इच्छासहितत्रिविक्रमप्रीत्या० इच्छासहितत्रिविक्रमः प्री०॥ एवं ४ क्रमेण॥ क्षेत्रेश्वरौ प्रीयेतां प्रीतौ स्तः॥ एता देवता०॥ ततः विष्णुप्रतिमायां पुष्पद्वयं॥ तद्विष्णोः। एवं कलशे। विष्णुकलशे। प्रतद्विष्णुः। ब्रह्मकलशे। ब्रह्मा देवानां। शिवकलशे। शिवोभूत्वा मह्यमग्नेथो। यमकलशे। यमो दाधार पृथिवीं। यथाप्रेतसंख्यं प्रेतकलशेषु। आहन्पितॄन्सु। ऋतुनारायणकलशेषु। वषट्ते विष्ण॥ इति विष्णुपूजनम्॥ ॥ अथाग्निकर्म॥ पात्रं तिला०। अग्निं परिसमूह्य। ९ आदौ पञ्च। अपूपचरुमानीय। उत्तरतः संस्तीर्णे। सावित्राणि अग्नये वायवे[6] जुष्टं निर्वपामि। एवं प्रोक्षामि॥ इदं हविः। आज्यदर्शनं। आत्मनो० भवानी० पितुः विष्णोः समस्त० अतीतत० अग्नये ६ प्र, द्वि, तृ, च, विष्णुश्राद्धे अग्नये

वैश्वानरायेदमाज्यमर्पयामिनमः ॥ आज्यभागान्ते । कूष्मा-ण्डहोमः, कूष्माण्डब्राह्मणं च हुत्वा, प्रधानानि ॥ अग्न-येस्वाहा ६ ॥ ऋतुतिथिः । इळामग्ने । वैश्वानरायेत्युपस्थानं । यद्देवादेवहेळनमित्यञ्जलिः ॥ वैश्वानरायेतितर्पणम् आत्मनो० भवानी० पितुर्विष्णोः समस्त० अतीत० प्र, द्वि, तृ, च, एवं त्रयोदशे विष्णुश्राद्धे अग्निः प्रीयतां अग्निः प्रीतोऽस्तु[६] ॥ हुतमेक्षणं । आश्रावितं । त्र्यायुष्यं । विमुच्य । नयामि ॥ पुनरग्निं परिसमूह्य ९ आदौ पञ्च । चरौ सावित्राणि वासु-देवाय । भवान्यै[१०] पृथ्वीरूपायविष्णवे ४ अब्रू ४ तेजो ४ वा ४ आका ४ ऋतुना ४ इन्द्रादिभ्यः प्र, द्वि, तृ, च, विष्णुश्राद्धे जुष्टं निर्वपामि एवं प्रोक्षामि । आज्यभागान्ते । अन्नहोमः । निषुसीद गणपते । वषट्ते तावत् । प्रधानानि । तद्विष्णोः । वासुदेवायस्वाहा । उद्वयन्तमसं । हांह्रींसः सूर्यायस्वाहा भवान्यै[१०] । प्रतद्विष्णुः स्तवते । १ ब्रह्मा देवानां २ शिवोभूत्वा ३ यमो दायाद ४ [illegible] । आहन्मि

तृन्सु । (यथा ऋतुनारायणसंख्यं) वषट्तेविष्ण० ४ । तद्वि-
ष्णोः० विष्णुपञ्चायतनदेवताभ्यः । इन्द्रा पर्वता० । ऐ-
न्द्राग्नं तावत् ॥ एवं आज्यहोमः ॥ तर्पणं । अनेन आत्मनो
भवानी० पितुर्विष्णोः समस्त० अतीतव० महागणपतिः
कुमारः श्रीः । वासुदेवः । ह्रांह्रींसःसूर्यः । भवानी । पृथ्वी-
रूपोविष्णुः अब्रूपोब्रह्मा तेजोरूपःशिवः, वायुरूपो यमः,
आकाशाकृतिशून्यरूपाः प्रेतविष्णवः । ऋतुनारायणाः
विष्णुपञ्चायतनदेवताः ॥ इन्द्रः वज्रहस्तः तेजः चण्डः
प्र, द्वि, त्र, च, विष्णुश्राद्धे अन्नाज्याहुतिभिः प्रीयन्तां
प्रीताः सन्तु ॥ तदनु विष्णुपञ्चकम् । तर्पणं । ततो यवतिल-
तण्डुलहोमः ॥ गायत्रीब्राह्मणं । तर्पणम् । तदनु अध्वर्योयं०
प्रधानानि । तद्विष्णोः । वासुदेवायस्वाहा ॥ उद्वयन्तमसं ॥
मार्तण्डब्राह्मणं च (पृ ४८ पं १) हुत्वा । ह्रांह्रींसःसूर्यायस्वाहा ॥
मलिम्लुचब्राह्मणं (पृ ४६ पं १२) भवान्यैस्वाहा १० ॥ तर्पणम् ॥
प्रायश्चित्तस्थानकं ॥ तर्पणम् ॥ प्रतद्विष्णुः । विष्णुकारमस-

क्तानि (पृ १ पं ३) तर्पणम् ॥ अनेन भवानी० आत्मनो० पितुर्विष्णोः समस्त० अतीतव० प्र, द्वि, तृ, च, एवं त्रयोदशे विष्णुश्राद्धे पृथिवीरूपो विष्णुः ४ प्रीयतां प्रीतोऽस्तु ॥ ब्रह्मा देवानां० । ब्रह्मकारणसूक्तानि । तर्पणम् (पृ. ५ पं. ८) । अब्रूपो ब्रह्मा प्रीयतां ॥ शिवो भूत्वा ॥ शिवकारणसूक्तानि । (पृ. ७ पं. ७) तर्पणम् । तेजोरूपः शिवः प्रीयतां ॥ यमो दाधार पृथिवीं । यमकारणसूक्तानि । (पृ. १३ पं. १०) तर्पणम् । वायुरूपोयमः प्रीयतां । यथाप्रेतसंख्यं । आंहन्पितॄन्सु । पितृकारणानि । (पृ. १८ पं. १२) श्राद्धब्राह्मणं च तर्पणम् । आकाशाकृतिशून्यरूपप्रेतविष्णवः प्रीयन्तां प्रीताः सन्तु । वषट्तेविष्ण ४ तदनु स्रुवेणाज्यहोमः । "अभिन्नो देवी" इति ऋतुनारायणसूक्तम् (पृ. ७३ पं. ५) ॥ तर्पणम् ॥ ॐतद्विष्णोः । विष्णुपञ्चायतनदेवताभ्यः स्वाहा ॥ तर्पणम् । इन्द्रा पर्वता । सूक्तानि वा । ऐन्द्राग्नं ॥ तर्पणम् । अनेन आत्मनो० । भवानी० पितुर्विष्णोः समस्त० अतीत० प्र, द्वि, तृ, च,

वा त्रयोदशे विष्णुश्राद्धे महागणपतिः० इन्द्रादयः यव-तिलतण्डुलहोमेन प्रीयन्तां प्रीताः सन्तु ॥ रुद्रपञ्चकं। तर्पणम्। देवीपञ्चकं। तर्पणम् ॥ रक्षोघ्नमन्त्राः ॥ तर्पणम् ॥ ऋतुतिथिः ॥ आश्रावितं तावत् ॥ गोप्रदानं ॥ अग्नेर्यवि-ष्ठब्राह्मणपूजनम् ॥ यथा ॥ ॐ भूः पुरुषमावाहयामिनमः ३। ॐ भूर्भुवः स्वः ३। नमोस्त्वनन्ताय ३। सर्वाविष्णु-सूर्यगायत्रीः। (पृ. ८५ पं. १३) आदिदेवाय वि ३। भास्क-राय वि ३। विश्वप्रकाशाय वि ३। योगीशाय वि ३। सूर्यरूपायवि ३। नमोधर्मे ३। घृणिः सूर्य ३। अतीत-ज्येष्ठशुक्लद्वादशीभूत्वा द्वादश्यां इच्छासहितस्य त्रिवि-क्रमस्य प्रीत्यर्थं एवं अद्य वर्तमानवैशाखमासस्य तिथौ वा (मले चेदारम्भः स्यात्) अद्य वर्तमान (भानूल्लङ्घित) वा मलिम्लुचमासस्य तिथौ सत्यभामासहितस्य नरकारेः प्रीत्यर्थं तत्सन्निधौ च अद्यतावत् भवानी० अग्नेः ६ वासुदेवस्य। ह्रांह्रींसःसूर्यस्य। भवान्याः १० पृथिवी-

रूपस्यविष्णोः ४ अब्रूपस्य ब्रह्मणः ४ तेजोरूपस्यशिवस्य ४ वायुरूपस्य यमस्य ४ आकाशाकृतिशून्यरूपाणां प्रेतविष्णूनां । इच्छास० त्रिविक्रमादीनां ऋतुनारायणानां । आत्मनो० पितुर्विष्णोः समस्तप्रेतविष्णूनां तेषां त्रिविधकायिकवाचिकमानसिकपापनिष्कृत्यर्थं प्र, द्वि, तृ, च, एवं त्रयोदशे विष्णुश्राद्धे अग्नेर्यविष्ठब्राह्मणपूजनमहं करिष्ये ॐकुरुष्व ।। अग्नेर्यविष्ठाय समालभनं गन्धोनमः, अर्घोनमः पुष्पंनमः धूपोनमः दीपोनमः वासोनमः । दक्षिणायै । एतादेवताः ।। पूर्ववत्पृच्छां विसर्ज्य ।। यवोदकं नमः उदकतर्पणं नमः ।। आश्रावितं । विमुच्य । नयामि ।। पुनः परिसमूह्य ९ पुरस्तात् ।। वैश्वदेवादि नित्यकर्म कुर्यात् ।। ।।

ततः श्राद्धमारभेत ।। सव्येनाऽचम्य ।। ( तत्र प्राङ्मुखानृतुनारायणपूजार्थं विप्रांश्चतुरः ४ विष्णुकारणादि पूजार्थं चोदङ्मुखान् विप्रान् पञ्च ५ उपवेश्य पूजां कुर्यात् ।।) यथा । ॐभूः पुरुषमावाहयामिनमः ३ । ॐभूर्भुवः स्वः ३ । (पृ. ८० पं. १३) सर्वा

विष्णुसूर्यगायत्रीः। अतीतज्येष्ठशुक्लद्वादशीभूत्वा द्वादश्यां इच्छासहितस्य त्रिविक्रमस्य प्रीत्यर्थं एवं अद्य भानूल्लङ्घित वा मलिम्लुचमासस्य शुक्लपक्षस्य तिथौ निष्कलासहितस्य महामार्तण्डस्य प्रीत्यर्थं तत्सन्निधौ च अद्यतावत् भवानी० भगवतः पृथिवीरूपस्य विष्णोः, ४ अब्रूपस्य ब्रह्मणः, ४ तेजोरूपस्य शिवस्य, ४ वायुरूपस्य यमस्य, ४ आकाशाकृतिशून्यरूपाणां प्रेतविष्णूनां ४ तेषां त्रिविधपापनिष्कृत्यर्थं प्रथमे विष्णुश्राद्धे ब्राह्मणपूजनं ऋतुनारायणपूर्वकं एवं द्वितीये एवं तृतीये एवं चतुर्थे एवं त्रयोदशे विष्णुश्राद्धे ब्राह्मणपूजनं ऋतुनारायणपूर्वकमहं करिष्ये ॐकुरुष्व ॥ यवान्विकीर्य ॥ तत्रादौ ऋतुनारायणपूजा ॥ इच्छासहितस्य त्रिविक्रमस्य प्रथमे। प्रीतिसहितस्य वामनस्य द्वितीये। रतिसहितस्य श्रीधरस्य तृतीये। मायासहितस्य हृषीकेशस्य चतुर्थे विष्णुश्राद्धे इदमासनं नमः ॥ एवं इच्छास० त्रिविक्रमाय प्र, प्रीतिस० वामनाय द्वि। रतिस० श्रीधराय तृ।

मायास० हृषीकेशाय चतुर्थे विष्णुश्राद्धे त्वां भोजयामि ॐभोजय ॥ इच्छास० त्रिविक्रमं प्रथमे । प्रीतिस० वामनं द्वितीये । रतिस० श्रीधरं तृतीये । मायास० हृषीकेशं चतुर्थे विष्णुश्राद्धे आवाहयिष्यामि ॐमावाहय । यवान्विकीर्य ॥ पाद्यादि सर्वं ॥ ॥ ततः कारणपूजा ॥ ॥ भगवतः पृथ्वीरूपस्य विष्णोः इच्छास० त्रिविक्रमस्य प्रथमे । प्रीतिस० वामनस्य द्वितीये । रतिस० श्रीधरस्य तृतीये । मायास० हृषीकेशस्य चतुर्थे विष्णुश्राद्धे इदमासनं नमः ॥ एवं । अब्रूपस्य ब्रह्मणः आदिपत्नीस० लोकेशस्य प्रथमे । सृष्टिस० पद्मजन्मनः द्वितीये । विधात्रीस० विधातुः तृतीये । धात्रीस० प्रजापतेः चतुर्थे । विष्णुश्राद्धे इदमासनं नमः ॥ एवं तेजोरूपस्य शिवस्य शर्वाणीस० महादेवस्य प्रथमे । योगीश्वरीस० उमापतेः द्वितीये । पार्वतीस० हरस्य तृतीये । रुद्राणीस० श्रीकण्ठस्य चतुर्थे विष्णुश्राद्धे इदमासनं नमः । एवं वायुरूपस्य यमस्य ऊर्ध्वकेशीस० श्राद्धदेवस्य प्रथमे ।

तमीस० कालस्य द्वितीये । धूम्रीस० परेतराजस्य तृतीये । लोकसंहारिणीस० महिषस्य चतुर्थे । इदमासनं नमः ॥ आकाशाकृतिशून्यरूपस्य पितुः विष्णोः समस्तप्रेतविष्णूनां ४ प्र, द्वि, तृ, च, इदमासनं नमः ॥ भगवते पृथिवीरूपाय विष्णवे ४ अब्रूपाय ब्रह्मणे तेजोरूपायशिवाय ४ वायुरूपाय यमाय ४ आकाशाकृतिशून्यरूपप्रेतविष्णुभ्यः प्र, द्वि, तृ, च, एवं त्रयोदशेविष्णुश्राद्धे ब्राह्मणं त्वां भोजयामि ॐ भोजय । भगवन्तं पृथ्वीरूपं विष्णुं ४ अब्रूपं ब्रह्माणं ४ तेजोरूपं शिवं ४ वायुरूपं यमं ४ आकाशाकृतिशून्यरूपप्रेतविष्णून् प्र, द्वि, तृ, चतुर्थेविष्णुश्राद्धे आवाहयिष्यामि ॐ आवाहय ॥ यवान्विकीर्य ॥ शन्नो देवी । लाजाश्च । भगवते पृथ्वीरूपायविष्णवे ४ पाद्यं नमः । अब्रूपायब्रह्मणे ४ पाद्यं नमः । तेजोरूपायशिवाय ४ पाद्यं नमः । वायुरूपाययमाय ४ पाद्यं नमः । आकाशाकृतिशून्यरूपप्रेतविष्णुभ्यः ४ पाद्यं नमः ॥ आचम्य । पुनः ।

शन्नो देवी । आपःक्षीरं । भगवन्पृथ्वीरूपविष्णो ४ इदं वोऽर्घ्यंनमः । एवं अन्नरूपब्रह्मन् ४ । तेजोरूपशिव ४ वायुरूपयम ४ आकाशाकृतिशून्यरूपप्रेतविष्णवः प्र, द्वि, तृ, च, इदं वोऽर्घ्यंनमः ॥ एवं गन्धोनमः । आचम्य । एवं अर्घपुष्पधूपदीपवासांसिनमः । क्रमेण पुष्पपूजा स्वैःस्वैर्मन्त्रैः ॥ प्रतद्विष्णुः १ ब्रह्मा देवानां २ शिवो भूत्वा मह्यमग्ने ३ यमो दाधार ४ यथाप्रेतसंख्यं ॥ आहन्पितॄन्सु ॥ ऋतुनारायणब्राह्मणेषु । वषट्ते विष्ण ४ ॥ पृथ्वीरूपस्यविष्णोरर्घ्य दानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु । एवं अन्नरूपस्य ब्रह्मणः । तेजोरू॰ वायुरू॰ आकाशा॰ अर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोस्तु ॥ तदनु । ऋतुनारायणेभ्यः इच्छासहिताय त्रि॰ प्र, द्वि, तृ, च॰ इदमन्नं शृतमभिघार्य । पृथ्वीरूपाय ४ अ ४ ते ४ वा ४ आकाश॰ प्र, द्वि, तृ, च, इदमन्नं शृतमभिघार्य । प्रक्षाल्य तण्डुला॰ वैदिकामयर्याति । मनसा ... तूष्णीं ॐ इदं

घृतं वासिच्य । इच्छासहिताय त्रिविक्रमायेत्यादिक्रतुनारायणेभ्यः क्षीरं घृतं वासिच्य । इच्छास॰त्रिविक्रमाय प्रथमे, प्रीतिसहिताय—वामनाय द्वितीये, रतिस॰ श्रीधराय तृतीये, मायास॰ हृषीकेशाय चतुर्थेविष्णुश्राद्धे यथोपस्थितं॰ नमो देवेभ्यः ॥ अथ कारणेभ्यः । पृथ्वीरूपायविष्णवे प्र, द्वि, तृ, चतुर्थे विष्णुश्राद्धे अन्नंनमः । अब्रूपाय ४ तेजोरूपाय ४ वायुरूपाययमाय प्र, द्वि, तृ, च, अन्नंनमः । आकाशा॰ पित्रेविष्णवे समस्त प्र, द्वि, तृ, च, अन्नंनमः ॥ अन्नं मधु २ पृथिव्यैनमः विष्णवेनमः । इदं विष्णुर्विचक्रमे॰ विष्णो इदं रक्षस्व ॥ पृथ्वीरूपाय विष्णवे प्रथमे ४ यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नंनमः । एवं अब्रूपाय ब्रह्मणे प्र, द्वि, तृ, च, यथोप॰ । तेजोरूपायशिवाय यथोप॰ । वायुरूपाययमाय ४ यथोप॰ । आकाशाकृ॰ प्र, द्वि, तृ, च, पित्रे विष्णवे समस्त॰ यथोप॰ अमृतमन्नं नमः ॥ अद्यदिने अद्ययथा॰ ।

शन्नो देवी ॥ ऋतुनारायणेभ्यः प्र, द्वि, तृ, च, विष्णुश्राद्धे अपोशानं नमः ॥ शन्नो देवी ॥ पृथ्वीरूपाय विष्णवे ४ अपोशानं नमः । अब्रूपायब्रह्मणे० ४ तेजोरूपा ४ वायु० ४ आकाशा० पित्रे विष्णवे, समस्त० प्र, द्वि, तृ, च, विष्णुश्राद्धे अपोशानं नमः ॥ इति सर्वत्र पृथक् २ योज्यं ॥ तत्र अमृतेन सह भोक्तव्यमसुरा निवर्तन्तां विष्ण्वादयः कारणा आगच्छन्तु ॥ पयः पृथिव्याः० । दधि क्राव्णो० घृतवती० मधुवाता ऋतायते । अन्यानि च वैष्णवसूक्तानि पठेत् ॥ ॥ तदनु पिण्डविधिः ॥ दक्षिणाग्रान्दर्भानास्तीर्य ॥ शन्नो देवी । पृथ्वी ४ अ ४ ते ४ वा ४ आका ४ पित्रे विष्णवे समस्त–प्र, द्वि, तृ, च, एवं त्रयोदशे विष्णुश्राद्धे भूपृष्ठे दर्भास्तरणे–अवनेजनं नमः । अन्नं पात्रे स्थाल्याः समुद्धृत्य । तिलास्तोयं । सव्यं जानु भूमौ निधाय, पिण्डदानं कुर्यात् ॥ ॐ भूः पुरुषमावाहयामिनमः ३ ॐ भूर्भुवः स्वः ३ (पृ. ८५ पं० १३) सर्वा विष्णुसर्वगायत्रीः । नमोऽस्तु ३ । [illegible] ३ ।

जितन्ते ३ । नमः का ३ । विश्वरू ३ । नरसिं ३ । आदिदेवा ३ । भास्कराय ३ । योगीशा ३ । विश्वघ्न ३ । सूर्यरू ३ । नमोध ३ । घृणिः सूर्य ३ । अतीतज्यैष्ठशुक्लद्वादशीभूत्वा द्वादश्यां इच्छासहितस्यत्रिविक्रमस्यप्रीत्यर्थं अद्यतावत् भानूल्लङ्घित वा मलिम्लुचमासस्य शुक्लपक्षस्य तिथौ निष्कलासहितस्य महामार्तण्डस्य प्रीत्यर्थं सन्निधौ च । भगवन् पृथ्वीरूपविष्णो इच्छासहितत्रिविक्रम प्रथमेविष्णुश्राद्धे एष ते विष्णुपिण्डोनमः । अप उपस्पृश्य । एवं प्रीतिसहितवामन द्वितीये विष्णुश्राद्धे एष ते विष्णुपिण्डोनमः, अप उपस्पृश्य । रतिस० श्रीधर तृतीये वि० एष ते विष्णुपिण्डोनमः, अप उ० । मायास० हृषीकेश चतुर्थेविष्णुश्राद्धे एष ते विष्णुपिण्डोनमः, अप उपस्पृश्य ॥ एवं ॐ भूः पुरु ३ । अब्रूपब्रह्मन् एष ते ब्रह्मपिण्डोनमः अप उपस्पृश्य ॥ एवं ॐ भूः पु० ३ । तेजोरूपशिव ४ एष ते शिवपिण्डोनमः, अप उ० ॥ एवं ॐ भूः पु० । वायुरूप-

यम ४ एष ते यमपिण्डोनमः अप उ०॥ एवं ॐभूः पु० । आकाशाकृतिशून्यरूप पितः विष्णो प्र, द्वि, तृ, च, एष ते प्रेतविष्णुपिण्डो नमः अप उपस्पृश्य ॥ एवं यथाप्रेतसंख्यम् ॥ ये लुप्तपिण्डाः पितरोऽस्मदीया गर्भे प्रणष्टा जलभूमिमग्नाः । ते तृप्तिभाजः पररूपयुक्ताः पापैर्विमुक्तास्त्रिदिवं प्रयांतु ॥ आमगर्भेभ्यो लुप्तपिण्डेभ्योनमः ॥ एवं पृथक् २ वासोनमः । वीरान्नं नमः ॥ पिण्डलेपं निवार्य । क्रमेण गन्धार्घपुष्पधूपदीपभक्ष्यभोज्यबलितिलमधुमिश्रोदकपात्राणि । पृथक् २ क्रमेण हिमपानं नमः इत्यादि ॥ आचम्य । वसन्ताय नमः ॥ शन्नोदेवी । ऊर्जंदेवेभ्यः सुभगा मनुष्या उत ऊर्जंपितृभ्यो अष्टि ऊर्जं दधातु आविवेश ऊर्जांसिनमस्कारं करोमिनमः ॥ मा मेक्षेष्टा । अमृतमस्तु ॥ सर्वमन्नमुपादाय । विष्णुश्राद्धं कश्चित्सम्पन्नं भोः, सुसम्पन्नं, तृप्यन्तु भवन्तः, तृप्ताः स्मः, शेषमन्नं ॥ मित्रभृत्यजनैः सार्धं पश्चाद्भुञ्जीत वा-

ग्यतः । "तेऽन्नेन तृप्ताः क्रीडन्तु ध्रुवेनाम्भसि निर्मले । सर्वान्नं प्रेतपतये ददामि विकिरं भुवि" ॥ हस्तौ प्रक्षाल्य ॥ आचम्य ॥ विष्ण्वादिकारणेभ्यः प्र, द्वि, तृ, च, आचमनीयंनमः पृथक् २ । आकाशा० पित्रे विष्णवे प्र, द्वि, तृ, च, आचमनीयंनमः ॥ ऋतुनारायणेभ्यः आचमनीयंनमः ॥ ततो दक्षिणा ॥ शन्नोदेवी० ॥ पृथ्वीरूपायविष्णवे ४ दक्षिणायै । एवं ब्रह्मादिभ्यो दक्षिणायै ॥ पित्रे विष्णवे प्र, द्वि, तृ, चतुर्थेविष्णुश्राद्धे, दक्षिणायै ॥ पुनः शन्नोदेवी । ऋतुनारायणेभ्यः दक्षिणायै ॥ क्षेत्रेशबलिः ॥ ततः प्रतिमादि प्रेतविष्णुकलशान्तं विसृज्य । यथा । ॐभूः पुरुषं विसर्जयामिनमः ३ विष्णुसूर्यगायत्रीः । अतीतज्यैष्ठशुक्लद्वादशीभूत्वा द्वादश्यां इच्छासहितस्य त्रिविक्रमस्य प्रीत्यर्थं एवं । अद्य वर्तमानभानूल्लङ्घितमासस्य शुक्लपक्षस्य तिथौ दशम्यां वा एकादश्यां वा द्वादश्यां निष्कलास० महामार्तण्डनाथस्य प्रीत्यर्थं सन्निधौ च

अद्यतावत् भवानी० । भगवतो वासुदेवस्य ८ भवान्याः १० भगवतः पृथ्वीरूपस्य विष्णोः ४ अब्रू ४ तेजो ४ वायु ४ आकाशा० ४ ऋतुनारायणानां ४ आत्मनो पितुर्विष्णोः समस्त० तेषां त्रिविधकायिकवाचिकमानसिकपापनिष्कृत्यर्थं प्र, द्वि, तृ, च, एवं त्रयोदशेविष्णुश्राद्धे विष्णुप्रतिमापूजनं कारणकलशपूजनं ऋतुनारायणपूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ यवोदकं नमः विष्णुप्रतिमायां । आपन्नोसि । ध्येयः सदा । यः कश्चिन्नरके घोरे प्रेतः प्राप्तः स्वकर्मणा । विष्णो द्विजेन्द्र भगवंस्तं नय स्वर्गमुत्तमम् ॥ नास्ति विष्णुसमो देवो नास्ति विष्णुसमः प्रभुः । नास्ति विष्णुसमः कश्चिन्महानरकमोचकः ॥ भगवन्देवदेवेश भक्तानुग्रहकारक । मोचयित्वा त्विमं प्रेतं गच्छ देव स्वमालयम् ॥ अथ विष्णुकारणे । शङ्खचक्रगदापाणिभगवान्मधुसूदनः । श्रीपतिर्गरुडारूढ उत्तारयतु मत्पितृन् ॥ नीलोत्पलाभं [illegible]

युतं बाहुचतुष्टयेन । शङ्खाब्जचक्रासिगदाभृतं चाप्यघापहं केशवमेव नौमि ॥ ब्रह्मकलशे । चतुर्वेदसमाख्यातो गायत्रीपतिरुत्तमः । हंसाधिरूढो भगवानुत्तारयतु मत्पितॄन् ॥ चतुर्भुजं हंसयुगे वसन्तं रक्ताङ्गवस्त्रं च हविर्भुजप्रभम् । वेदाधिपं सृष्टिकरं चतुर्मुखं प्रणौमि ब्रह्माणमतिस्तुतं विभुम् ॥ अथशिवकलशे । वृषाधिरूढो भगवाञ्छूलहस्तस्त्रिलोचनः । गौरीश्वरो महादेव उत्तारयतु मत्पितॄन् ॥ पद्मासनं श्वेतरुचिं गिरीशं गौरीयुतं त्र्यम्बकमायताक्षम् । पीयूषकुम्भं दधतं प्रणौमि रुद्राक्षमालां त्वऽभयं वरं च ॥ यमकलशे । यमः पाशधरोदेवः साक्षान्महिषवाहनः । पुण्यपापपरिद्रष्टा ह्युत्तारयतु मत्पितॄन् ॥ सूर्यात्मजं खञ्जनवर्णमीशं रक्ताम्बरं शक्तियुतं महोग्रम् । दण्डोग्रपाणिं महिषासनस्थं प्रणौमि मृत्युं निरयाधिनाथम् ॥ प्रेतकलशेषु यथाप्रेतसंख्यं । नानादेहगताः प्रेता नानारूपधरा मताः । मद्दत्तेनाक्षतोयेन लभन्तां प्रीति-

मुत्तमाम् ॥ अथ लुप्तपिण्डे ॥ पतितस्य निराशस्य नरका-न्तर्गतस्य च । त्वं विष्णो लुप्तपिण्डस्य प्रेतस्योद्धरणं कुरु ॥ ये केचिन्मानुषेलोके लुप्तपिण्डोदकक्रियाः । तेषां त्वदग्रदत्तेन पिण्डेनास्तु सुखं विभो ॥ परा प्रीतिः परं सौख्यं स्वर्गप्राप्तिरनुत्तमा । कृतदुष्कर्मणां नृणां मोक्षदो भव भास्कर ॥ वीरवीरेश० । आह्वानं नैव० ॥ नमो ब्रह्मणे ॥ तर्पणम् । तत्रादौ कारणकलशप्रतिपादनम् । सावित्राणि अद्यतावत् आत्मनो० भवानी० पितुर्विष्णोः स-मस्त० अतीतवर्तमान० प्र, द्वि, तृ, चतुर्थेविष्णुश्राद्धे पृथ्वीरूपाय विष्णवे ४ पृथ्वीरूपविष्णुकलशं सहिरण्यं सवाससं सान्नं सर्वोपकरणोपेतं ददानि ३ ॥ एवं ब्रह्म-कलशं, शिवकलशं यमकलशं सर्वोपकरणयुतं ददानि ३ ॥ ततः प्रेतकलशान्प्रतिपादयेत् ॥ सावित्राणि० अद्य तावत् भवानी । आत्मनो । पितुर्विष्णोः । अतीतवर्तमान । प्र द्वि तृ चतुर्थेविष्णुश्राद्धे आकाशाकृतिसन्ध्यारूपप्रेतविष्णवे

प्रेतविष्णुकलशं सहिरण्यं सवाससं सान्नं सर्वोपकरणयुतं ददानि ॥ एवं यथाप्रेतसंख्यम् ॥ ततः प्राङ्मुखेषु ऋतुनारायण-कलशान्प्रतिपादयेत् ॥ सावित्राणि । अद्यतावत् । भवानी । आत्मनो । पितुर्विष्णोः समस्तप्रेतविष्णूनां । अतीतवर्त-मान । प्र द्वि तृ चतुर्थेविष्णुश्राद्धे इच्छासहित–त्रिविक्रमाय इच्छासहित–त्रिविक्रमकलशं सहिरण्यं सवाससं सान्नं सर्वोपकरणयुतं ददानि एवं द्वितीयं,तृतीयं चतुर्थ ऋतुनारा-यणकलशं ददानि ३ ॥ तदनु विष्णुप्रतिमां होत्रे दद्यात् । सावित्राणि । अद्यतावत् भवानी । आत्मनो । पितु-र्विष्णोः समस्त–अतीतवर्तमान । प्र द्वि तृ च एवं त्रयो-दशे विष्णुश्राद्धे वासुदेवाय इमां विष्णुप्रतिमां सहिरण्यां सवाससं सान्नां सर्वोपकरणयुतां ददानि ३ ॥ प्रतिगृह्णामि ३ ॥ ततोऽक्षय्यसाधनम् ॥ पूर्ववद्यथा कलशेषु कृतं दक्षिणाक्ष-य्यसाधनं तथात्रापि कार्यम् (पृ१०६ पं १५)॥ ततो ब्राह्मणविस-र्जनम् ॥ ॐ भूः पुरुषं विसर्जयामिनमः ३ । ॐ भूर्भुवः स्वः ३।

नमोस्त्वनन्ताय ३ । सर्वा विष्णुसूर्यगायत्रीः ॥ वासुदेवायवि ३ । जितन्ते ३ । नमःकारण ३ । विश्वरूपाय ३ । नरसिंहाय ३ । आदिदेवाय ३। भास्कराय ३ । योगीशाय ३। विश्वप्रकाशाय ३ । सूर्यरूपाय ३ । नमो धर्म ३ । घृणिः सूर्य ३ । अतीतज्यैष्ठशुक्लद्वादशीभूत्वा द्वादश्यां इच्छासहित–त्रिविक्रमस्य प्रीत्यर्थं अद्यतावत् भानूल्लङ्घित (वा) मलिम्लुचमासस्य शुक्लपक्षस्य तिथौ दशम्यां एकादश्यां वा द्वादश्यां निष्कलास० महामार्तण्डनाथस्य प्रीत्यर्थं सन्निधौ च भगवतः पृथ्वीरूपस्यविष्णोः ४ अब्रूपस्य ब्रह्मणः ४ तेजोरूपस्य शिवस्य ४ वायुरूपस्य यमस्य ४ आकाशाकृतिशून्यरूपस्य पितुर्विष्णोः समस्तप्रेतविष्णूनां त्रिविधकायिकवाचिकमानसिकपापनिष्कृत्यर्थं प्रथमे विष्णुश्राद्धे ब्राह्मणपूजनं ऋतुनारायणपूर्वकं एवं द्वि, तृ, च, एवं त्रयोदशेविष्णुश्राद्धे ब्राह्मणपूजनं ऋतुनारायणपूजापूर्वकमच्छिद्रं सम्पूर्णमस्तु ॥ पृ ४ अ ४ ते ४ वा ४

आ ४ प्रथमे, द्वि, तृ, च, त्रयोदशे विष्णुश्राद्धे तिलोदकं नमः उदकतर्पणं नमः ॥ ततो गोग्रासादि । विष्वक्सेनजयन्ताभ्यां दद्याद्बलिमथोर्जितम् । महादंष्ट्रैकवदन विश्वजिद्विश्वतोमुख ॥ बलिं गृह्ण विष्वक्सेन सर्वाभयवरप्रद ॥ कलशे पृच्छां विसर्ज्य । गायत्र्यैनमः ॐभूर्भुवः स्वः ३ अद्यतावत् भवानी० महागणपतेः अग्नेः ६ भवान्याः १० विष्णुपञ्चायतनदेवतानां इन्द्रस्य वज्रहस्तस्य तेजसः चण्डस्य आत्मनो पितुर्विष्णोः समस्तप्रेतविष्णूनां तेषां त्रिविधकायिकवाचिकमानसिकपापनिष्कृत्यर्थं प्र, द्वि, तृ, च, त्रयोदशेविष्णुश्राद्धे कलशपूजनं ग्रहमण्डलपूजनं क्षेत्रेश्वरपूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ यवोदकं नमः उदकतर्पणं नमः ॥ आपन्नोसि । आह्वानं । नमो ब्रह्मणे । पात्राणि चालयेच्छ्राद्धे । आचम्य । उदकलशमुपनिधाय । बोधश्चमा । मन्त्रार्थाः ॥ ततो बहिस्तीर्थं गत्वा चाकानदीतीरे कुशपाणिर्विप्रहस्ते दक्षिणाभिमुखस्तिलोदकं दद्यात् ॥ नदीस्था

तिलाम्भस्तु हस्ते दर्भसमन्वितः । दक्षिणाभिमुखस्तिष्ठ-न्दद्याद्धस्ते तिलोदकम् ॥ विमले च नदीतीरे तिलाम्भः पुनरेवच । दद्युर्विप्रान्दर्भयुतान् उदकुम्भान्विशेषतः ॥ ततस्तिलाम्भो विप्राणां हस्ते दद्यात्समाहितः । कुर्वीयुर्गोत्रपूर्वं हि नामबुद्धौ निवेद्य च ॥ एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने । समुद्धरति तत्सर्वं नात्र कार्या विचारणा ॥ बहिर्गत्वा तिलाम्भस्तु हस्ते दर्भ-समन्वितः । दक्षिणाभिमुखस्तिष्ठेद्दद्याद्धस्ते तिलोदकम् ॥ विष्णुश्राद्धमिदं यस्य प्रेतस्य दयया कृतम् । क्षीणपापस्य तस्येदं तृप्तयेऽस्तु तिलोदकम् ॥ यत्र क्वचन संस्थस्य क्षुत्तृष्णोपहतस्य च । कुम्भीपाकोपतप्तस्य इदमस्तु तिलोदकम् ॥ अयं नारायणबलिः कृतो यस्य दयालुभिः । मुक्तपापस्य तस्येदं तृप्तयेस्तु तिलोदकम् ॥ यः कश्चिन्नरके घोरे प्राप्तः प्रेतः स्वकर्मणा । विष्णो द्विजेन्द्र भगवंस्तं नय स्वर्गमुत्तमम् ॥ नास्ति विष्णुसमो देवो नास्ति वि-

ष्णुसमः प्रभुः । नास्ति विष्णुसमः कश्चिन्महानरक-
मोचकः ॥ सप्तसप्ततिकोटीनां सप्तद्वीपनिवासिनाम् ।
आजन्मभुवनेशानामिदमस्तु तिलोदकम् ॥ भगवन्देवदे-
वेश लोकनाथ जगत्पते । मोचयित्वा त्विमं प्रेतं गच्छ
देव स्वरालयम् ॥ यावत्तिला मनुष्येण गृहीताः पितृत-
र्पणे । निर्गच्छन्त्यसुरास्तावत्सिंहं दृष्ट्वा मृगा यथा ॥ अस्म-
त्कुले मृता ये च गतिर्येषां न विद्यते । तेषामावाहयिष्यामि
दर्भपृष्ठे तिलोदकम् ॥ बन्धुवर्गे मृता ये च नामगोत्र-
विवर्जिताः । स्वगोत्रे परगोत्रे वा इदमस्तु तिलोदकम् ॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये । दंष्ट्रिभ्यश्च पशु-
भ्यश्च मरणं पापकर्मिणाम् ॥ अग्निदग्धा मृता येच ना-
ग्निदग्धास्तथाऽपरे । विद्युच्चौरहता ये च इदमस्तु तिलो-
दकम् ॥ रौरवे चान्धतामिस्रे कालसूत्रे गताश्च ये । तेषा-
मुद्धरणार्थाय इदमस्तु तिलोदकम् ॥ असिपत्रवने घोरे
कुम्भीपाके च ये स्थिताः । तेषामुद्ध० ॥ [illegible]

घोरे यमलोके प्रतिष्ठिताः । तेषामुद्धर० । ये पापयोनिषु-गताः पक्षिकीटसरीसृपाः । अथवा वृक्षयोनिस्था इद-मस्तु तिलोदकम् ॥ ये बान्धवा अबान्धवा येऽन्यजन्मनि बान्धवाः । तेषामक्षय्यतृप्त्यर्थमिदमस्तु तिलोदकम् ॥ ये केचित्पितृरूपेण वर्तन्ते स्वेन कर्मणा । तेषामुद्धरणार्थाय इदमस्तु तिलोदकम् ॥ येऽसंख्ययातनासंस्थाः प्रेतलो-केषु पापिनः । तेषामुद्धरणार्थाय० ॥ जात्यन्तरसहस्राणि भ्रमन्ते स्वेन कर्मणा । तेषामु० ॥ दिव्यन्तरिक्षभूमिस्थाः पितरो बान्धवादयः । तेषामुद्ध० ॥ गुरुश्वशुरबन्धूनां ये चान्ये बान्धवादयः । तेषा० । मातामहकुले ये च गतिर्येषां न विद्यते । तेषा ॥ असत्कुले लुप्तपिण्डाः पुत्रदारविव-र्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ विरूपा आमगर्भाश्च जातोऽज्ञातः कुले मम । तेषा० । महारणे ये मम धर्मयुक्ता च्छिन्दन्ति शत्रून्समरे नि-सङ्गाः । तेषामुद्धरणार्थं निखिलं [illegible] मया स्वधा इदमस्तु

ददामि तेषाम् ॥ विना विवाहं निधनं गता ये तथाऽहि- विद्युन्नखिदंष्ट्रिनष्टाः । मयापि दत्तं सकलं च तेषां प्र- यान्तु ते तृप्तिममोघामद्य ॥ जलप्रपाते गरतो मृता ये विषाग्निशस्त्रैर्मनुजाश्च येपि । तथा पशुभ्यश्च तथाऽवटेभ्यो जलप्रदानेन मया च तृप्ताः ॥ जाता मृता ये च मदी- यवंशे तथा मृता ये श्वशुरे गुरौ च । ये मत्कुले पिण्ड- विहीनजाताः क्रियाविलोपातिजनो धनाढ्यः ॥ पङ्गुस्तथा वामनकुब्जकाश्च जात्यन्धमूढो बधिरो विरूपः । क्लीबाश्च शण्ठाश्च विनाग्निभ्यश्च तेभ्यस्तिलाक्षयजलं ददामि ॥ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वयेऽस्मिन्मम सङ्गताश्च तेभ्यस्तिलाक्षयजलं ददामि ॥ मित्राणि सख्यः पशवश्च भृत्या स्पृष्टाश्च सृष्टाश्च कृतोप- काराः । जन्मान्तरे ये मम संगताश्च तेभ्यस्तिलैर्मिश्र- जलं ददामि ॥ येषां गृहे मया भुक्तं येषां भुञ्जाम्यहं पुनः । तेभ्यः सर्वेभ्यः पितृभ्य इदमस्तु तिलोदकम् ॥

अद्यतावत् । भवानीभास्वती० । आत्मनो । पितुर्विष्णोः समस्तप्रेतविष्णूनां तेषामतीतवर्तमानभविष्यद्वाङ्मनःकायोपार्जितपापनिवारणार्थं दशविधपापनिष्कृत्यर्थं कुम्भीपाकादि असिपत्रान्तसमस्तनरकेभ्य उत्तारणार्थं नारायणबलिविधाननिमित्तं प्र, द्वि, तृ, च, त्रयोदशे विष्णुश्राद्धे बहिर्गततीर्थराजप्रीत्या तिलाम्भसा पुण्यवृद्धिरस्तु स्वर्गप्राप्तिरस्तु नरकोद्धरणमस्तु पृथ्वीरूपविष्णुसायुज्यमस्तु । अब्रूपब्रह्मसायुज्यमस्तु । तेजोरूपशिवसायुज्यमस्तु । वायुरूपयमसायुज्यमस्तु । आकाशाकृतिशून्यरूपप्रेतविष्णुसायुज्यमस्तु ॥ अनन्तशाखकल्पायेति ब्राह्मणेषु पुष्पम् ॥ स्वस्वमन्त्रैश्च ॥ इति विष्णुबलौ विष्णुश्राद्धविधिः ॥

## अथ पूयमानब्राह्मणम्–(तर्पणोपयोगि)

"अयारुचा त्र्यृचसनातनाः पारुच्छोपाऽत्यष्टं नानानं चतुष्कं शिशुः पाङ्क्तं हि शर्यनावत्येकादश कश्यपोय इन्दो चतुष्क-

पश्यदग्रे सप्त त्रितः पिप्रीहीनः पात एकः" ॥ अयारुचा हि-
रण्या पुनानो विश्वा द्वेषांसि तरति स्वयग्वभिः सूनोर-
स्वयग्वभिः ॥ धारा सुतस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियात्यृक्कभिः सप्तास्येभिर्ऋक्कभिः ॥
त्वन्त्यत्पाणीनां विधेवः सुमः सत्यभिर्मा जयसि । सु
आदमऋतस्यधीतिभिर्दमे ॥ परावता न साम तद्यत्रार-
णन्ति धीतयः । त्रिधातुभिररुषीभिर्वयोदधे रोचनानो
वयोदधे ॥ पूर्व्यामनुप्रतीच्यां यांति चेकितत्संरश्मि-
भिर्यतते दर्शतो रथो दैव्यदर्शितो रथः ॥ अग्मन्नुक्तानि
पौंस्येन्द्राज्जैत्राय दर्शयन् । वज्रश्च यद्भवतो अनुपच्युता
समत्सुनापच्युता ॥ १ ॥ नानानो वातानोधियोविश्र-
तानि जनानाम् । उक्षारिष्टरुतं भिषग्ब्रह्म सुन्वन्तमिच्छ-
तीन्द्रायेन्दो परिस्रव ॥ जरतीभिरुषधीभिः पूर्णेभिः शकु-
नानाम् । कर्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रा-
येन्दो परिस्रव ॥ कारुरहन्ततोभिषगुपलप्रक्षिणीनना नाना-

धियो वसूयवोन्नगा इव तस्थिमिन्द्रायेन्दो परिस्रवँ ॥ अश्वो वोढा सुखं रथं हमरामुपमन्त्रिणः । शेषेरोमन्वन्तौ भेदौ वारिर्माण्डूका यच्छतीन्द्रायेन्दो परिस्रवँ ॥२॥ शर्यनाऽवति सोममिन्द्रा पिवतु वृत्रहा ॥ बलन्दधान आत्मनि करिष्यन्वीर्यँ महदिन्द्रायेन्दो परिस्रवँ ॥ आ पवस्व दिशां पततु आर्जकात्सोममीढ्वः । ऋतवाक्येन सत्येन श्रद्धया तपसा स्वत इन्द्रायेन्दो परिस्रवँ ॥ पर्जन्यवृद्धं महिषन्तं सूर्यस्य दुहिताभरत् । तं गन्धर्वाः प्रतिगृभ्णान्तं सोमेरसमाऽदधुरिन्द्रायेन्दो परिस्रवँ ॥ ऋतं वदन्नृतद्युम्नः सत्यं वदन्सत्यकर्मा । श्रद्धां वदन्सोमराजन्धात्रा सोमपरिष्कृत इन्द्रायेन्दो परिस्रवँ ॥ सत्यमुग्रस्य बृहतः संस्रवन्ति संस्रवः । संयन्ति रसिनो रसाः पुनानो ब्रह्मणाहर इन्द्रायेन्दो परिस्रवँ ॥ ३ ॥ यत्र ब्रह्मा पवमानच्छन्दस्यां वाचं वदन् । गृभ्णा सोमे महीयते सोमेनानन्दञ्जनयन्निन्द्रायेन्दो परिस्रवँ ॥ यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् । तस्मिन्मानेहि पाव-

मानाऽमृतेलोके अक्षित इन्द्रायेन्दो परिस्रवँ[११] ॥ यत्र राजा वैवस्वतो यत्रावरोधनन्दिवः । यत्रासूर्याहुतीरपस्तत्रमाम-मृतङ्कृधीन्द्रायेन्दो परिस्रवँ[१२] ॥ यत्रावकामश्चरणन्त्रिनाके त्रिदिवे दिवः । लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रवँ[१३] ॥ यत्र कामोनिकामश्च यत्र ब्रध्नस्य विष्टपम् । स्वधया यत्र तृप्तिश्च तत्र माममृतङ्कृधीन्द्रायेन्दो परिस्रवँ[१४] ॥ यत्र लोक्यास्तनूर्भृत्यजाः श्रद्धया तपसा जिताः । तेजाश्च यत्र ब्रह्म च तत्र माममृतङ्कृधीन्द्रायेन्दो परिस्रवँ[१५] ॥ यत्र देवा महात्मनः सेन्द्राः समरुद्गणाः । ब्रह्मा च यत्र विष्णुश्च तत्र माममृतङ्कृधीन्द्रायेन्दो परिस्रवँ[१६] ॥ यत्र तत्परमं पदं विष्णोर्लोके महीयते । देवैः स्वकृतक-र्मभिस्तत्र माममृतङ्कृधीन्द्रायेन्दो परिस्रवँ[१७] ॥ यत्रानन्दश्च मो-दश्च मोदप्रमोद आसते । कामस्य यत्राप्तकामस्तत्र मा-ममृतङ्कृधीन्द्रायेन्दो परिस्रवँ[१८] ॥ ५ ॥ य इन्दोः पवमानस्या-नत्र धामान्यत्रक्रमेत । तमाहुः सुकृता इति यज्ञे सोमा

विधुर्मन इन्द्रायेन्दो परिस्रवँ[१९] ॥ ऋषिर्मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन्गिरः । सोमन्नमस्यं राजानं यो यज्ञे वीरुधाम्पतिरिन्द्रायेन्दो परिस्रवँ[२०] ॥ सप्तदिशो नाना सूर्याः सप्तहोतार ऋत्विजः । देवा आदित्या ये सप्त तेभिःसोमाऽभिरक्ष ण इन्द्रायेन्दो परिस्रवँ[२१] ॥ यत्ते राजं शतं हविस्तेन सोमाभिरक्ष णः । आरातीवमानस्तारीर्मोचनः किञ्चनममदिन्द्रायेन्दो परिस्रवँ[२२] ॥ ६ ॥ इति अवने मन्त्रपाठेन० ॥ पूयमाणब्राह्मणं समाप्तम् ॥

## अथ सूर्यबलिविधानं लिख्यते

**आदौ प्रायश्चित्तविधिः** ॥ शुक्लपक्षे चेद्वलिविधानं स्यात्तदाऽष्टम्यां नक्तभोजनं, नवम्यामुपवासः, दशम्यां प्रायश्चित्तं, एकादश्यां भर्गक्रिया दशाह्निका, द्वादश्यां भर्गश्राद्धं कार्यम् । (कृष्णपक्षे तु) एकादश्यां नक्तभोजनं,द्वादश्यामुपवासः,त्रयोदश्यां प्रायश्चित्तं, चतुर्दश्यां भर्गक्रिया दशाह्निका, अमावस्यां भर्गश्राद्धमिति नियमः ॥ ॥ पञ्चगव्येन स्वात्मानं भूमिं च संशोध्य । शान्तिचूर्णेन [illegible]

शद्वयं च संस्थाप्य ॥ भद्रपाठादि । कलशे प्रदानं । अग्न-
येनमः ६ उद्वयन्तमसं । उदुत्यञ्जां । चित्रन्देवानां ।
तच्चक्षुर्देवं । हंसः शुचिषत् । घृणिः सूर्यमादित्यमर्चयन्ति
तपः सत्यं मधु क्षिरन्ति । तद्ब्रह्म तदापोज्योतीरसोमृतं
ब्रह्मभूर्भुवः स्वरोम् ॥ ॐ ह्रांह्रींसः सूर्यायनमः ८ भवा-
न्यैनमः भास्वत्यै, भीमायै, योगीश्वर्यै, विमलनागराजाय,
कमलनागाय, गोतमनागाय, चक्रसुतायै, चाकाभगवत्यै,
महामार्तण्डनाथायै नमः । प्रतिमाकलशे । चित्रन्देवानां ।
ॐ ह्रांह्रींसःसूर्यायनमः॥ विष्णुपञ्चायतनदेवताभ्यः नमः॥
इन्द्रा पर्वता ॥ अर्चन्तस्त्वा ॥ यजमानमानीय ॥ अनाभौ ॥
उदुत्यमित्यग्निसूक्तेन न्यासो यथा ॥ शिरसि । उदुत्यञ्जातवे
दसं । ललाटे, अपत्येतायवो । नेत्रयोः, अदृशन्नस्य केतवो ।
श्रोत्रयोः, तरणिर्विश्वद । नासिकायां, प्रत्यङ्देवानां । मुखे,
येनापावकचक्षसा । कण्ठे,विद्यामेषिरजः । सव्यबाहौ, सप्तत्वा
हरितो । वामबाहौ, अयुक्तसप्तशुन्ध्यवः । हृदि, उद्वयन्तम-

सस्परि[१०] । नाभौ, उद्यन्नद्य मित्रमहः[११] । गुह्ये, शुकेषु मे हरिमाणं[१२] । लिङ्गे, उदगादयमादित्यो[१३] । ऊर्वोः, सर्मक्षिपोर्ध्वमहर्सो[१४]। जान्वोः, उद्यन्नद्य विनोभजं[१५] । पादयोः, उद्यन्तन्त्वा मित्रमह आरो[१६] ।। तथाच पुनः द्विगुणसूर्यसूक्तेन च । शिरसि, चित्रन्देवानां[१]। ललाटे, सूर्यो देवीमुषसं रोचमानांमार्यो न योषामभ्येति पश्चात् । यत्रानरो देवयन्तो युगानि वितन्वते प्रतिभद्राय भद्रम्[२] । नेत्रयोः, तच्चक्षुर्देवं[३] ।। नासिकायां, भद्रा अश्वा हरितः सूर्यस्य चित्रा एतद्वा अन्नमद्यासः । नमस्यन्तो देव आपृष्ठमस्थुः परिद्यावा पृथिवीयन्ति सद्यः[३] ।। मुखे, तत्सूर्यस्य देवत्वन्तरहित्वं मध्याकर्तो विततं सञ्जभार । यदेदयुक्तहरितः सदस्थ दात्राती वासस्तनुते सिमस्मै[४] । कण्ठे, तन्मित्रस्यवरुणाभिचक्षे सूर्यो रूपं कृणुते द्यौरुपस्थे । अनन्तमन्यद्रुषदस्यपाजः कृष्णमन्यद्धरितः सम्भरन्ति[५] ।। बाह्वोः, अद्या देवा उदिताः सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो मामहन्ता-

मदितिः सिन्धुः पृथिवीरुतद्यौः ॥ हृदि, इदं ह नूनमेषां स्वप्नं भिक्षेन मर्त्यः । आदित्यानामपूर्व्यं सळीमनिं । नाभौ, बृहद्वरूथं मरुतान्देवं त्रातारमश्विना । मित्रमीमहे वरुणं स्वस्तये । जान्वोः, त्वमिमा ओषधीः सोमविश्वा-स्त्वमाप अजयस्त्वं गाः । त्वमाततमुतोर्वन्तरिक्षं त्वं ज्योतिषा वितमो विवर्त्त । सर्वाङ्गेषु, अङ्गादङ्गाल्लोम्नो ॥ तथा । चित्रं पादयोः, देवानां जङ्घयोरित्यादि । ॐहृद, ह्रांशिर, ह्रींशिखा, सः कव, सूर्यायनेत्राभ्यां, नमः अस्त्राय फट् ॥ अपसर्पन्तु० । प्राणायामः ॥ तीर्थे स्नेयं । यत्रास्ति माता । अद्यतावत् महागणपतये । अग्नये वायवे सूर्याय । ॐह्रांह्रींसःसूर्याय । भवान्यै । विष्णुपञ्चायतनदेवताभ्यः । इन्द्राय वज्रहस्ताय । तेजसे चण्डाय । सूर्यबलिसङ्कल्पितप्रायश्चित्तनिमित्ते दीपोनमः धूपोनमः ॥ अपसव्येन ॥ समस्तमातापितृभ्यो दीपः स्वधा ॥ सव्येन । पित्रेभर्गाय । समस्तप्रेतभर्गेभ्यः सूर्यसायुज्यार्थे सूर्यबलिसङ्कल्पितप्रायश्चित्तहोमे दीपो-

नमः । संवः सृजामि । अश्विनोः प्राणा । देहवद्देवस्य न्यासः ॥ ॐगायत्र्यैनमः ॐभूर्भुवः ३ । आदिदेवाय वि ३ । भास्कराय वि ३ । विश्वप्रकाशाय वि ३ । योगीशाय ३ । सूर्यरूपाय वि ३ । नमो धर्मनिधानाय ३ । घृणिः सूर्यमादित्यमर्चयन्ति तपः सत्यं मधु क्षरन्ति । तद्ब्रह्म तदापोज्योतीरसोमृतं ब्रह्मभूर्भुवःस्वरोम् ३ । अद्य तावत् । ॐह्रांह्रींसःसूर्यस्य । महागणपतेः । अग्नेःवायोः सूर्यस्य । भवान्याः । विष्णुपञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य । तेजसः । चण्डस्य । आत्मनोवाङ्मनःकायो० पितुः भर्गस्य । समस्तप्रेतभर्गाणां सूर्यसायुज्यार्थे (पातित्यदोषाऽभोज्यभोजनदोषाऽकार्यकारणदोषाऽविक्रेयविक्रेणनदोषाऽग्राह्यग्रहणदोषस्वजातिक्रियाविलोपनदोषजनितनानाविधनरकोत्तारणार्थे सूर्यबलि सङ्कल्पितप्रायश्चित्तहोमे महामार्तण्डपादमूले सन्निधौ च) सूर्यपूजनं कलशयागपूजनं तेजश्चण्डपूजनमर्चामहं करिष्ये ॐकुरुष्व । तिलसर्षपयवान्विकीर्य ॥ अपत्येता, आकृष्णेन,

ध्रुवाद्यौरित्यासनं । ह्रांह्रींसःसूर्यस्य, महागणपतेः । अग्नेः । भवान्याः । विष्णुपञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य तेजसः चण्डस्य इदमासनं नमः ॥ महागणपतये । अग्नये । ह्रांह्रींसःसूर्याय । भवान्यै । विष्णुपञ्चायतनदेवताभ्यः । इन्द्राय वज्रहस्ताय । तेजसे चण्डाय । युष्मान् वः पूजयामि ॐ पूजय । उदुत्यञ्जात० । ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहायुषे । ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥ महागणपतिं । अग्निं । ह्रांह्रींसःसूर्यं । भवानीं । विष्णुपञ्चायतनदेवताः । इन्द्रं वज्रहस्तं । तेजसं चण्डं आवाहयिष्यामि ॐआवाहय । यवान्विकीर्य ॥ आवाहयाम्यहं देवं भानुं० । एहि सूर्य० । त्रैलोक्यं भूषितं० । पद्मासनः पद्मकरःपद्म० ॥ तेजोवतीसहितदेव तवानुषङ्गात्प्राप्तं पदं पितृभिरस्तसमस्तदोषैः । घोरान्धकारपटलच्छिदुरस्य तस्मादावाहनं पितृमखेऽद्य करोमि तेऽहम् ॥

ब्रह्माण्डगेहपरि० ॥ हेमाम्भोजप्रवालप्रतिमतनुरुचिं चारुखट्वाङ्गपद्मौ शंखं चक्रं च पाशं सृणिमतिरुचिरामक्षमालां कपालम् । हस्ताम्भोजैर्दधानं त्रिनयनविलसद्वेद वक्त्राभिरामं मार्तण्डं वल्लभार्धं मणिमयमुकुटं हारदीप्तं भजामः ॥ घृणिः सूर्य ३ । प्राणायामः ॥ शन्नो देवी । लाजागन्धवचाकुष्टं वालुकं पद्मकेसरम् । नागकेसरसंयुक्तं पाद्यमेतत्प्रकल्पयेत् ॥ अदृशन्नस्य । सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ॥ हिरण्यवर्णाः शु ४ । ह्रांह्रींसःसूर्याय । पाद्यंनमः । महागणपतये । अग्नये । भवान्यै । विष्णुपञ्चायतनदेवताभ्यः इन्द्राय वज्रहस्ताय । तेजसे चण्डाय पाद्यंनमः । शेषंनिवार्य ॥ शन्नोदेवी । कुङ्कुमागुरुकर्पूरचन्दनैश्च सुगन्धिभिः । मृगजातीफलैर्युक्तमर्घ्यमेतत्प्रकल्पयेत् ॥ तरणि विश्व० । मनोहेतिविवस्वत आदित्यः कृत्रिमशरुः । पुरा न रजसोऽवधीत् ॥ आपो हिष्ठा ॥ ह्रांह्रींसःसूर्य इदं वोर्घ्यंनमः । महागणपते । अग्ने ।

भवानि । विष्णुपञ्चायतनदेवताः । इन्द्र वज्रहस्त । तेजः चण्ड इदं वोऽर्घ्यंनमः ॥ प्रत्यङ् देवानां० । विश्वेद्वेषो व्यंहतिमादित्यासो विसंहितम् । विश्वग्विवृहतारपः ॥ शन्न आपो । ह्रांह्रींसः सूर्याय आचमनीयंनमः ॥ येना पावक चक्षुषा० । शन्नो भव चक्षुषा शन्नो अह्ना शं भानुना शं महिम्ना शं घृतेन । यथा शं मधुच्छन्दसं सद्गुरोणे तत्सूर्य द्रविणं देहि चित्रम् । इदमापः । ह्रांह्रींसः सूर्याय मन्त्रस्नानीयं नमः ॥ ततः "पयोदधिघृत" इत्येकविंशतिस्नानमनु ॥ पयः क्षीरं दधिसर्पिरिक्षुस्तिला यवामधु । लाजामृतं पञ्चगव्यं गन्धपुष्पौषधीस्तथा । त्रयोदशस्नानेऽमूनि सूर्यस्योक्तानि सूरिभिः ॥ "उदुत्यञ्जात०" । ( पृ. १४१ पं. ११ ) इति "चित्रन्देवाना" मिति ( पृ. १४२ पं. ४ ) सूक्तेन च ह्रांह्रींसः सूर्याय त्रयोदशस्नानानि नमः ॥ श्लोकतर्पणं कृत्वा ॥ हंसः शुचिषदिति मन्त्रगुड्डकम् ॥ रक्षोहणं० । प्रत्यग्नेहरेत्याऽरात्रिका ॥ तां वा वस्तून्युश्मसि इति नेत्रस्पर्शनं ॥ रथे अक्षेषु इत्यनु-

लेपनम् ॥ आसनायनमः । विद्यामेषि रज० । तेषां हि चित्रमुक्त्यं वरूथमस्तिदाशुषे । आदित्यानामरङ्कृधि ॥ युवा सुवासा० । ह्रांह्रींसःसूर्याय वस्त्रंनमः ॥ सप्त त्वा हरितो० । अनेहो न उरुव्रज ऊरूची विप्रसत्तवे । कृधिस्तोकाय जीवसे ॥ यज्ञोपवीतं नमः ॥ अयुक्तसप्तसि० । यो मूर्धानः क्षितीनामदब्धासः सुयशसः । व्रता रक्षन्ति अद्रुहः ॥ गन्धद्वारां० । समालभनं गन्धोनमः ॥ उद्वयन्तमस० ॥ तेन अस्तु वृकाणामादित्यासो मुमोचः । स्तेनबद्धमिवादिते ॥ पुष्पवती० । ह्रांह्रींसःसूर्यायनमः । महागणपतये अर्घोनमः पुष्पंनमः । तत्र "उदुत्यज्ञातवे" इति षोडशर्चेन । (पृ. १४१ पं. ११) "चित्रं देवानां इति षोडशर्चेन सूक्तेन च । पुष्पपूजा । पूर्वे सूर्यायनमः, आग्नेये दिवाकरायनमः, दक्षिणे विवस्वते, नैर्ऋते भगाय, पश्चिमे वरुणाय, वायवे महेन्द्रायनमः, उत्तरे आदित्याय, ईशाने शान्ताय, पूर्वे सप्ताश्वेभ्यः, दक्षिणे यमराज्ञे, पश्चिमे भास्कराय, उत्तरे रवये, मध्ये सूर्याय, प्रत्यक्ष-

देवाय, परमार्थसाराय, विश्वधात्रे, नरकोत्तारणाय, तेजोधिपतये, तमोपहाय, ॐ हुं मार्तण्डाय, व्योमरूपिणे, अनन्ताय, ह्रांह्रींसःसूर्याय ८ प्राणरूपाय हंसात्मने, निष्कलासहिताय महामार्तण्डाय, अशोकाय, विशोकाय, नन्दीशाय, पुष्टिवर्धनाय, सुवर्णचूडाय, शङ्खाय, मणिभद्राय, सूर्याय, विभ्राजाय वैनमोनमः अर्घोनमः पुष्पंनमः ॥ उद्यन्नद्यमित्रमह० । अपोषुण इयं शरुरादित्या अप दुर्मतिः । अस्मदेत्व जघ्नुषी ॥ धूरसि धूर्व धूर्वन्त । धूपं परिकल्पयामिनमः ॥ शुकेषु मे० । तत्सूर्यो बृहदर्चींष्यश्रेत्पुरो विश्वाजनिममानुषाणाम् । सोमो देवा ददृशे रोचमानः क्रत्वः सुक्रतः कर्तृभिरभूत् ॥ तेजोसि शुक्रमसि ॥ ह्रांह्रींसःसूर्याय । रत्नदीपं परिकल्पयामिनमः ॥ "देवस्य त्वा सवितुः" इति चामरं । काण्डात्काण्डादिति छत्रम् । तच्चक्षुरित्यादर्शंपरिकल्पयामिनमः ॥ एताभ्यो देवताभ्यः दीपोनमः । वासोनमः । एतासां देवतानामर्घ्यदानं ।

उदगादय० । यद्वः श्रान्ताय सन्वते वरूथमस्ति यच्छन्दिः । तेन नो अध्यवोचत ॥ मधुवात ऋतायते० । ह्रांह्रींसः सूर्याय मधुपर्कंपरिकल्पयामिनमः ॥ समैक्षिषोर्द्ध्व० । नाभिरसि चक्षुरसि श्रोत्रमसि सूर्य मे देहि । प्राणं चक्षुर्मे व्यानम् ॥ ह्रांह्रींसः । पुष्पाञ्जलिं समर्पयामिनमः ॥ उद्यन्नद्य विनोभज० । सूर्यमसि सविता दृंह, विष्णुरसि देवानां दृंह, सूर्यः सूर्ये विभज्यते सूर्यरश्मिप्रतिष्ठः ॥ "ह्रांह्रांसःसूर्यायनमः भगवन् प्रसीद" इति सप्त प्रदक्षिणानि ॥ चूडारत्नमरीचिरञ्जितभुवा देवेन जम्भद्विषा यस्त्रैलोक्यमणिस्त्रिसन्ध्यममरैः साकं समभ्यर्च्यते । मत्तैरावणकुम्भपीठविलुठत्सिन्दूरपूरच्छविः स श्रेयांसि रविर्दधातु नलिनीनिर्निद्रताकोविदः ॥ इति स्वाष्टाङ्गपातप्रणामः ॥ अन्नं नमः २ । दक्षिणायै । ततोऽक्षय्यं यथा । पद्मगर्भापते० । अद्यतावत् भवानीभा० महामार्तण्डपादमूले तत्सन्निधौ पितुः भर्गस्य । समस्तेष्वभर्माणां सर्वसायुज्यार्थे (पातित्यदोषाऽभोज्यभोजन-

दोषाऽकार्यकरणदोषाऽविक्रेयविक्रीणनदोषाऽग्राह्यग्रहणदोषस्वजा-
तिक्रियाविलोपनदोषजनितनानाविधनरकोत्तारणार्थे सूर्यबलिवि-
धानसङ्कल्पितप्रायश्चित्तहोमे ) कलशप्रीत्या० पुण्यवृद्धिरस्तु ।
सूर्यमण्डलप्राप्तिरस्तु ॥ एवं । अद्यतावत्० भवानीभास्वती०
सूर्यप्रतिमाप्रीत्या० पुण्यवृद्धिरस्तु सूर्यमण्डलप्राप्तिरस्तु ॥
एता देवता कलशेपुष्पद्वयं ॥ ततोऽग्निकर्म ॥ ॥ पात्रं
तिला । अग्निं परिसमूह्य ९ परिस्तीर्य १६ आदौ पश्च ॥
अग्निपूजा ॥ अग्नये समनमत् ॥ उत्तरतः संस्तीर्णे० महा-
गणपतये जुष्टं निर्वपामि एवं प्रोक्षामि ॥ इदं हविः ।
आज्यदर्शनं । आत्मनो० भवनी० पितुःभर्गस्य, समस्त-
प्रेतभर्गाणां सूर्यसायुज्यार्थे सूर्यबलिविधानसङ्कल्पितप्रा-
यश्चित्तहोमे अग्नये ६ ह्रांह्रींसःसूर्याय ८ इन्द्रादिभ्यः
अग्नये वैश्वानराय इदमाज्यमर्पयामिनमः ॥ आज्यभा-
गान्ते । कूष्माण्डमन्त्राणि कूष्माडब्राह्मणं च हुत्वा प्रधानानि
"तेजोसि" ॥ अग्नयेस्वाहा इत्याज्येन हुत्वा ॥ ततोऽन्नहोमः ॥

निष्वसीद० वषट्ते तावत् । ततः प्रधानानि । उद्वयन्तमस[1]० । उदुत्यञ्जा[2]० । चित्रन्देवाना[3]ं० । तच्चक्षु[4]र्दे० । हंसः शुचि[5]ं० । घृणिः सू[6]र्य० । ह्रांह्रींसः सूर्यायस्वाहा, सप्ताश्वाय ८ । भवान्यैस्वाहा । विष्णुपञ्चायतनदेवताभ्यः स्वाहा । इन्द्रापर्वता । ऐन्द्राग्नं ॥ ॥ एवमाज्यहोमः ॥ तर्पणं अनेन मन्त्रहोमेन पितुः भर्गस्य समस्तप्रेतभर्गाणां सूर्यसायुज्यार्थं महागणपतिः कुमारः० अन्नाज्याहुतिभिः प्रीयन्तां प्रीताः सन्तु ॥ विष्णुपञ्चकं हुत्वा तर्पणम् ॥ ततो यवतिलहोमः ॥ गायत्रीब्राह्मणं, तर्पणम् ॥ अध्वर्योयं—वषट्ते तावत् । ततः प्रधानानि । उद्वयन्तमस० ६ ऋचः हुत्वा मार्तण्डब्राह्मणं हुत्वा ह्रांह्रींसः सूर्यायस्वाहा ॥ तर्पणं । मलिम्लुचब्राह्मणं हुत्वा भवान्यैस्वाहा तर्पणम् ॥ प्रायश्चित्तस्थानकं हुत्वा वासुदेवाय स्वाहा ८ । तर्पणम् ॥ इन्द्रा पर्वता ॥ वा यथा कालं ॥ नवग्रहसूक्तानि वा हुत्वा ॥ तर्पणम् ॥ रुद्रपञ्चकं । तर्पणम् ॥ देवीपञ्चकं । तर्पणम् ॥ रक्षोघ्नमन्त्राः । तर्पणम् ॥

ऋतुतिथिः । इळामग्ने० । अग्नेत्वं पारयानव्यो० । वैश्वानरेण पावमान्यब्राह्मणेन चेत्युपस्थानम् ॥ यद्देवा देवेतिकुसुमाञ्जलिः ॥ वैश्वानराय पूयमानब्राह्मणेन चेतितर्पणम् ॥ अनेन मन्त्रहोमेनात्मनो० भवानी० पितुर्भर्गस्य समस्तप्रेतभर्गाणां सूर्यसायुज्यार्थं सूर्यबलिविधानसङ्कल्पितप्रायश्चित्तहोमे अग्निः प्रीयतां अग्निः प्रीतोस्तु । वायुः प्री, सूर्यः प्री । ब्रह्माप्री० । हुतमेक्षणं । आश्रावितं तावत् ॥ ब्राह्मणपूजनम् ॥ ॐभूः पुरुषमावाहयामि नमः ३ । ॐभूर्भुवःस्वः पु० ३ । आदिदेवायवि ३ । भास्करायवि ३ । विश्वप्रकाशायवि ३ । योगीशायवि ३ । सूर्यरूपायवि ३ । नमो धर्मनिधानाय३ ॥ घृणिः सूर्य ३। अद्यतावत् अग्नेः ६ ह्रांह्रींसः सूर्यस्य ८ भवान्याः आत्मनो० पितुः भर्गस्य भर्गाणां सूर्यसायुज्यार्थं (पृ. १४४पं.१०) अग्नेर्यविष्टब्राह्मणपूजनमर्चामहं करिष्ये । अग्नेर्यविष्ठाय दक्षिणान्तं । तदनु क्षेत्रशबलिः ततः सूर्यप्रतिमाविसर्जनं । ॐभूः पुरुषं विसर्जयामि नमः ३ । 'सर्वाः

सूर्यगायत्रीः" अद्यतावत् ह्रांह्रींसःसूर्यस्य ८ भवान्याः आत्म-
नो० पितुः भर्गस्य० (पृ.१४४ पं. १०) सूर्यपूजनमच्छिद्र-
मस्तु। यवोदकं।आपन्नोसि। तर्पणम्॥ प्रतिमाप्रतिपादनम्॥
सावित्राणि० अद्यतावत् भवानी० पितुः भर्गस्य समस्त-
प्रेतभर्गाणां अतीत० इमां सूर्यप्रतिमां ब्राह्मणाय ददानि ३
एता देवता। पूर्ववद्ब्राह्मणपृच्छां विसर्ज्य॥ आश्रावितमिति
पूर्णांदत्वा विमुच्य नयामि॥ नित्यकर्म वैश्वदेवादि सम्पाद्य।
कलशपृच्छां विसर्ज्य। ॐभूः पुरुषंविसर्जयामिनमः ३।
ॐभूर्भुवःस्वः ३। आदिदेवायवि ३ भास्करायवि ३
विश्वप्रकाशायवि ३। योगीशायवि ३। सूर्यरूपायवि ३
नमोधर्मनि ३। घृणिः सूर्य ३। अद्यतावत् महागण-
पतेः। अग्नेः ६। भवान्याः। विष्णुपञ्चायतनदेवतानां।
इन्द्रस्य वज्रहस्तस्य। तेजसः चण्डस्य। आत्मनो (पृ.१४४
पं.१०) कलशपूजनं ग्रहमण्डलपूजनं क्षेत्रेश्वरपूजनमच्छिद्रं
सम्पूर्णमस्तु॥ यवोदकं॥ आपन्नोसि। नमो ब्रह्मणे।
उदकतरं। इति सूर्यबलिविधाने प्रायश्चित्तम्॥

## अथ भर्गक्रियाविधिः ॥

तत्र शुक्लपक्षे एकादश्यां, कृष्णे तु चतुर्दश्यां भर्गक्रियारम्भः ॥ शालिचूर्णेन ब्रह्मकलशं तद्दक्षे सूर्यप्रतिमाकलशं तद्दक्षे सूर्यकलशं तद्दक्षे यमवैवस्वतकलशमुल्लिख्य क्षेत्रेशद्वयं च संस्थाप्य ॥ स्वस्त्ययनादि पठित्वा । प्रधानानि । ब्रह्मकलशे । उद्वयन्तमसस्परि । ऋचः ६ ह्रांह्रींसःसूर्यायनमः ॥ भवान्यैनमः ॥ सूर्यप्रतिमायां ॥ चित्रन्देवानां० ह्रांह्रींसःसूर्यायनमः । सूर्यकलशे ॥ सूर्योनो दिवस्पातु० । अस्य वामस्य पलि० । यमकलशे ॥ यमोदाधार०। त्रिकद्रुकेभिः०। विष्णुपञ्चायतनदेवताभ्यः । क्षेत्रस्य पतिना । ऐन्द्राग्नं । अर्चन्तस्त्वा ॥ ॥ यजमानमानीय ॥ अनाभौ० । उदुत्यञ्जात (पृ. १४१ पं. ११) इति सूक्तेन न्यासः ॥ तीर्थेस्नेयं । यत्रास्ति माता ॥ अद्यतावत् महागणपतये ह्रांह्रींसःसूर्यायँ । भवान्यै । कलशरूपाय सूर्याय । यमवैवस्वताभ्यां । विष्णुपञ्चायतनदेवताभ्यः तेजसे चण्डाय दीप्तेनमः ॥ आपस्त्वेन । सहस्रा-

मातापितृभ्यो दीपःस्वधा ॥ सव्येन। पित्रे भर्गाय समस्तप्रेतभर्गाणां सूर्यमण्डलप्राप्त्यर्थे भर्गक्रियासङ्कल्पे दीपोनमः ॥ संव्वः सृजामि । अश्विनोः प्राणा ॥ देहवद्देवस्य न्यासः ॥ ॐभूः पुरुषमावाहयामिनमः ३ ॐभूर्भुवः ३ । आदिदे ३ । भास्क ३ । विश्वप्र ३ । योगी ३ । सूर्यरू ३ । नमो धर्म ३ । घृणिः सूर्य ३ अद्यतावत् महागणपतेः । ह्रांह्रींसःसूर्यस्य । भवान्याः । कलशरूपस्य सूर्यस्य यमवैवस्वतयोः विष्णुपञ्चायतनदेवतानां तेजसः चण्डस्य । आत्मनो० पितुः भर्गस्य भर्गानां० (पृ. १४४ पं. १०) भर्गक्रियानिमित्तं कलशपूजनं सूर्यपूजनं सूर्यकलशपूजनं यमवैवस्वतकलशपूजनं तेजश्चण्डपूजनमर्चामहं करिष्ये दक्षिणान्तं कृत्वाऽक्षय्यम् ॥ पद्मगर्भापते भानो प्राप्तं पदमनामयम् । पितृभिर्भुविभावेन सौरमक्षय्यमस्त्विदम् । अद्यतावत् भवानी० पितुः भर्गतनुत्रस्य समस्तप्रेतभर्गाणां । अतीत० सूर्यप्रीत्या० सूर्यमण्डलप्राप्तिरस्तु । एवं भवानीकलशे । ततः सूर्यकलशे ।

निष्कलासहितमहामार्तण्डप्रीत्या० महामार्तण्डः प्रीतोस्तु सूर्यमण्डलप्राप्तिरस्तु ॥ यंमकलशे । कीनाशस्य च प्रीत्यर्थं मायया सहितस्य च । यमस्य धर्मराजस्य याममक्षय्य-मस्त्विदम् ॥ अद्यतावत् पितुः भर्गतनुत्रस्य विश्वप्रकाशस्य (पृ. १४४ पं. १०) यमवैवस्वतप्रीत्या० यमवैवस्वतौ प्रीयेतां प्रीतौ मे भवेताम् ॥ एवं तेजश्चण्डप्रीत्या एतादे-वता ॥ कलशे पुष्पद्वयं । तद्विष्णोः । प्रतिमायां चित्रन्देवानां । सूर्यकलशे । सूर्यो नो दिव० । अस्य वामस्य० ॥ यमकलशे यमो दाधार । त्रिकद्रुकेभि ॥ ॥ ततो वैश्वदेवादि नित्य-कर्म—अग्नयेस्विष्टकृते तावत् । ब्राह्मणपूजनं ॥ ॐभूः पुरु ३ । आदि० भास्करा० विश्व० योगी० सूर्य० नमो० घृणिः सू० । अद्यतावत् भवानी० ह्रांह्रींसः सूर्यस्य । भवान्याः । कलश-रूपस्य सूर्यस्य यमवैवस्वतयोः आत्मनो, पितुः भर्गतनुत्रस्य समस्त (पृ. १४४ १०पं.) अग्नेर्यविष्टब्राह्मणपूजनमर्चामहं करिष्ये । दक्षिणां [illegible] ॥ अद्यतावत् पितुः

भर्गतनुत्रस्य समस्तप्रेतभर्गतनुत्राणां भर्गक्रियानिमित्तं (भगवन् सूर्य प्रभातीर्थे प्रह्वीभूतस्य प्रशान्तिमयीं प्रकृतिं प्रापितस्य विमलोद्द्योततमे स्वमण्डले ब्रह्मवर्चसं साक्षात्कुरुष्विति) सूर्याय प्रकाशरूपाय परमार्थसाराय प्रत्यक्षदेवाय विश्वदात्रे नरकोत्तारकाय निष्कलासहिताय महामार्तण्डनाथाय ह्रांह्रींसः सूर्याय, महाश्वेतासहिताय परमतेजोरूपिणे सूर्याय विभ्राजाय वैनमोनमः ॥ इत्युपस्थानम् ॥ अथ सूर्यसम्मुखं खे पुष्पाणि क्षिपेत् ॥ ॥ कालात्मन्सर्वभूतात्मन् विश्वात्मन्विश्वतोमुख । यस्मादग्नीन्दुरूपस्त्वं पाहि नोऽतः प्रभाकर ॥ वीरवीरेश देवेश नमस्तेऽस्तु त्रिधात्मक । महामार्तण्ड वरद सर्वाभयवरप्रद ॥ त्वमेव सप्तधा भूत्वा च्छन्दोरूपेण भास्कर । यस्माद्भासयसे लोकान्पाहि नोऽतः प्रभाकर ॥ नमोनमः पापविनाशनाय विश्वात्मने सप्ततुरङ्गमाय । धाम्नामधीशाय [illegible]भवाय [illegible]शान्तिकर्त्रे ॥ नमस्ते देवदेवेश

वेदाहरणलम्पट । वाजिरूपेण मामस्मात्पाहि संसारसागरात् ॥ नमो धर्मनि० ॥ श्रीभगवन्सूर्याऽमुं प्रेतभर्गं स्वमण्डलं प्रापय ३ "यथाप्रेतसंख्यं एवं कृत्वा" ऋतं च सत्यञ्चाभीद्धात् इति पठेत् ॥ इति सूर्ये प्रत्यक्षपूजामनु । क्षेत्रेशबलिः ॥ ततः प्रतिमाकलशसूर्यकलशयमवैवस्वतकलशान् विसर्ज्य । ॐभूः पुरुषं विसर्जयामिनमः ३ ॐ भूर्भु । आदि । भास्क । विश्व । योगी । नमो धर्म । घृणिः सूर्य । अद्यतावत् ह्रांह्रींसःसूयस्य । कलशरूपस्सूयस्य । यमवैवस्वतयोः । आत्मनो० पितुः भर्गतनुत्रस्य । समस्त० (पृ. १४४ पं. १०) भर्गक्रियानिमित्तं सूर्यप्रतिमापूजनं सूर्यकलशपूजनं यमवैवस्वतपूजनमच्छिद्रंसम्पूर्णमस्तु ॥ यवोदकं नमः । आपन्नोसि ॥ प्रतिमाकलशे । नमो धर्म । जातवेदस्र० । सूर्यकलशे । अपरः शरणं० । यमकलशे । यमो वैवस्वतो नाम प्रेतरूपो महाबलः । पायादमुं सदातारं प्रेतमुक्तिं करोतुवै ॥ आवाहनं नैव । नमो० ब्रह्मणे ॥ ततोऽस्य-

णाय प्रतिपादयेत् ॥ सावित्राणि अद्यतावत् भवानी० पितुः भर्गतनुत्रस्य समस्त (पृ. १४४ १० पं.) सूर्यमण्डलप्राप्त्यर्थं इमां सूर्यप्रतिमां ददानि ३ ॥ एवं सूर्यकलशं ॥ ततो दर्भविष्टरे जीवादानं दत्वा, एवं यमवैवस्वतकलशं दद्यात् ॥ ततोऽक्षय्यं ॥ पद्मगर्भापते भानो प्राप्तं पदमनामयम् । पितृभिर्शुचिभावेन सौरमक्षय्यमस्त्विदम् । अद्यतावत् भवानी सूर्यसायुज्यार्थं सूर्यप्रीत्या० सूर्यः प्रीतोऽस्तु सूर्यमण्डलप्राप्तिरस्तु ॥ एवं कलशरूपसूर्यप्रीत्या० कलशरूपसूर्यः प्रीतोस्तु सूर्यमण्डलप्राप्तिरस्तु ॥ एवं कीनाशस्य च प्रीत्यर्थं मायया सहितस्य च । यमस्य धर्मराज्यस्य याममक्षय्यमस्त्विदम् ॥ अद्यतावत् यमवैवस्वतौ प्रीयेतां प्रीतौ मे भवतां ॥ एता देवताः ॥ ब्राह्मणपृच्छां विसर्ज्य (पृ१४४ पं १०) अग्नये स्विष्टकृतेस्वाहा । विमुच्य । नयामि ॥ धर्मं देहि ॥ गोग्रासादि । आयुः प्रजा ॥ कलशपृच्छांविसर्ज्य । ॐ भूःपुरुषं विसर्जयामिनमः २

आदिदे । भास्क । विश्व । योगी । सूर्यरू । नमो धर्म । घृणिः सू । अद्यतावत् भवानी० महागणपतेः ह्रांह्रींसः सूर्यस्य भवान्याः । विष्णुपञ्चायतनदेवतानां तेजसः चण्डस्य । आत्मनो पितुः भर्गस्य (पृ १४४ पं १०) भर्गक्रियानिमित्तं कलशपूजनं क्षेत्रेश्वरपूजनमच्छिद्रं सम्पूर्णमस्तु ।। यवोदकं । आपन्नोसि । नमोब्रह्मणे ।। उदकलशं । मन्त्रार्थाः ।। इति भर्गक्रियापूजाविधिः ।। ।। तदनु नदीतीरेऽन्यदेशे गच्छेत् ।। उक्तं च ।। "उदुत्यमिति मन्त्रेण उद्वयन्तमसस्ततः । स्मृत्वाप्यमुक-भावं च कुर्याद्दशोदकक्रियाः ।। हव्या[1] कव्या[2] प्रभा[3] धूम्रा[4] सौम्या[5] तीव्रा[6] प्रतापिनी[7] । रौद्री[8] ब्राह्मी[9] तथा धर्मा[10] क्रिया भर्गकला दश ।। पृथिव्या[1]पस्[2]तथा तेजो[3] वायु[4]राकाश[5] एवच । मनो[6]बुद्धि[7]रहङ्कारा[8]: प्रकृ[9]-तिः पुरुषो[10]दश ।।" अथ विधिः । सदर्भकाण्डहस्तो दक्षिणाभि-मुखो भर्गरूपान्प्रेतान्ध्यात्वा "उदुत्यञ्जा" इति दशर्चसूक्तेन प्रेतभर्गेभ्यस्तिलोदकाञ्जलयो देयाः ।। यथा । उदुत्यञ्जा[1] । अपत्येता[2] । अदृश्यन्न[3] । तरणिर्वि[4] । प्रत्यङ्दे[5] । येना पाव[6] ।

विद्यामेषिँ । सप्त त्वा हे । अयुक्त सप्तं । उद्वयन्तं ॥ अद्यतावत् भवानी० पित्रे भर्गाय । समस्त०प्रथमेऽहनि २, ३, ४, ५, ६, ७, ८, ९, दशमेऽहनि एष ते तिलोदकाञ्जलिःनमः ॥ तीर्थे स्तेयं० चाकाभगवत्यै गन्धादि । अद्यतावत् भवानी० पित्रे भर्गाय समस्त एष वः दीपोनमः ॥ ततो भूमिमुपलिप्य ॥ दक्षिणाग्रान्दर्भानास्तीर्य ॥ पित्रे भर्गाय समस्त०प्रथमेऽहनि०भूपृष्टे० एतद्वोऽवनेजनं नमः॥ प्रेतचरोरन्नमुद्धृत्य । तिलास्तोयं तथा क्षीरं० । सव्यं जानुं भूमौ निधाय ॥ ॐभूः पुरुषमावाहयामिनमः ३ । ॐभूर्भुवः । आदि । भास्क । विश्व । योगी । सूर्य । नमो । घृणिः अद्यतावत् भवानी० पितःभर्ग प्रथमेऽहनि हव्याहव्याकलाव्यापिन्नेष ते प्रथमः पार्थिवः पिण्डोनमः । अप उपस्पृश्य । एवं ॐभूः पुरुषमावाहयामि द्वितीयेऽहनि कव्याकव्याकलाव्यापिन्नेष ते द्वितीय आप्यः पिण्डोनमः । अपउपस्पृश्य । एवं द्वितीयेऽहनि—प्रभाख्या—तृतीयस्तैजसः । ३ ।

चतुर्थेऽहनि धूम्राख्या–चतुर्थो वायवः पिण्डः । ४ । पञ्चमेऽहनि सौम्याख्या–पञ्चम आकाशेयः पिण्डः । ५ । षष्ठेऽहनितीव्राख्या–षष्ठो मानसः पिण्डः ।६। सप्तमेऽहनि प्रतापिन्याख्या–सप्तमः बोधः पिण्डः । ७ । अष्टमेऽहनि रौद्याख्या–अष्टम आहङ्कारिकः पिण्डः । ८ । नवमेऽहनि ब्राह्मयाख्या–नवमः प्राकृतः पिण्डः । ९ । दशमेऽहनि धर्म्याख्याकलाव्यापिन्नेष ते दशमः पौरुषः पिण्डः अप-उपस्पृश्य ॥ इति प्रत्येकं पितरं दश दश पिण्डान्दद्यात् ॥ ("वा-सवीरान्नगन्धार्घादिभिरऽर्चां समापयेत् । पित आमन्त्रणेनेति प्रेत-नामापि तनुयादिति" कात्यायनकौमुद्युक्तिः ॥) पितः भर्ग प्रथमेऽहनि एतत्ते ऊर्णं वासोनमः वीरान्नंनमः । पितः भर्ग एष ते गन्धोनमः । अर्घोनमः पुष्पंनमः दीपो-नमः धूपोनमः ॥ पितः भर्ग प्रथमेऽहनि भक्ष्यभोज्यफल-मूलबलिः नमः । पितः भर्ग तिलमधुमिश्रमुदकं० । पितः भर्ग एतत्ते हिमपानादि नमः । सूर्यरूपं प्रेतं

ध्यात्वा । "उद्यन्तन्त्वा मित्रमह आरोहन्तं विचक्षणम् । पश्येम शरदः शतंजीवेम शरदः शतम्" इति प्रत्येकपिण्डेषु पुष्पाणि क्षिपेत् ॥ वामाङ्गुष्ठे विष्टरं निधाय ॥ अद्यतावत् भवानी० पितुः भर्गस्य प्रथमेऽहनि हव्याख्याकलाव्यापिनः सूर्यलोकप्राप्त्यर्थं भर्गप्रकृतिसाधनाय चाकाप्रवाहे प्रथम एष ते पार्थिवः पिण्डः पूरकोस्तु ॥ पितः भर्ग प्रथमेऽहनि एष ते तिलोदकुम्भोनमः । पितः भर्ग प्रथमेऽहनि एषते तिलोदकाञ्जलिः नमः ॥ एवं अद्यतावत्-भवानी० पितुः भर्गस्य द्वितीयेऽहनि कव्याख्याकलाव्यापिनः सूर्यलोकप्राप्त्यर्थं भर्गप्रकृतिसाधनाय चाकाप्रवाहे द्वितीय एष आप्यः पिण्डः पूरकोऽस्तु ॥ पितः भर्ग द्वितीयेऽहनि एषते प्रथमः तिलोदकुम्भोनमः । द्वितीयेऽहनि एष ते द्वितीयस्तिलोदकुम्भोनमः ॥ पितः भर्ग द्वितीयेऽहनि एष ते प्रथमस्तिलोदकाञ्जलिः नमः । पितः भर्ग द्वितीयेऽहनि एष ते द्वितीयस्तिलोदकाञ्जलिः नमः ॥

एवं दिनवृद्ध्या तिलोदकुम्भतिलोदकाञ्जलयो वर्धितव्याः ॥ इत्थं क्रमेण दशपिण्डान्क्षिपेत् ॥ ॥ तदनु भर्गकुम्भे सविष्टरे जलक्षीरमधुतिलान्नघृतगुडशर्करादिफलमूलादि एकीकृत्य पात्रान्तरे। अद्यतावत् भवानी० पितुः भर्गस्य समस्तप्रे० प्रथमेऽहनि द्वितीयेऽहनि ३, ४, ५, ६, ७, ८, ९ दशमेऽहनि सूर्यमण्डलप्राप्त्यर्थं एष सूर्यकुम्भोऽहोरात्रतृप्तयेऽस्तु ॥ भर्गक्रियायां सोदकुम्भं प्रेतकुम्भं च नास्ति ॥ ततो वपनं ॥ विष्णुबलियुते भर्गश्राद्धे द्विर्वपनं निषिद्धं, तदा विष्णुबलावेव कार्यम् ॥ तदनु भर्गकुम्भक्षेपणम् ॥ इदं पुरुषशार्दूला विमलं दिव्यमुत्तमम्। सूर्यलोके सुपानीयं प्रेता अत्र स्नात अपः पिबतेति स्नात्वा शुद्धवस्त्रधारणम् ॥ तिलकं। प्रत्यग्ने इत्यारात्रिका ऐन्द्राग्नमितितिलहोमः। तर्पणं महौषधिगणा रक्षोघ्नाः प्रीयन्तां प्रीताः सन्तु ॥ अहोरात्रं कर्तॄणामऽशौचं ॥ दीपं दद्यादहोरात्रं तीर्थाग्रेतिलतैलतः ॥ इति भर्गक्रियाविधानम् ॥ ॥

## अथ भर्गश्राद्धविधिः ॥

शुक्ले द्वादश्यां, कृष्णेऽमावस्यां ॥ दत्तात्रेयः । ततो विंशतिविप्रान्वै श्रेष्ठान् शुद्धान्निमन्त्रयेत् । इति ॥ त्रयोदश तथा विप्रान्प्राङ्मुखान्प्रतिपूजयेत् । त्रिभिश्च दशभिर्नाम्नां सूर्यस्य विश्वशक्तिभिः । उदङ्मुखांस्तथा विप्रान्सप्त वै प्रतिपूजयेत् ॥ आदौ ग्रहमण्डलं तद्दक्षे त्रयोदशकलशान् तन्मध्ये प्रतिमाकलशं तद्दक्षे सूर्यकारणकलशषट्कं तेषामधोवेदचतुष्टयीं तद्दक्षे यथाप्रेतसंख्यं कलशान् क्षेत्रेशद्वयं च संस्थाप्य ॥ तत्रादौ भद्रपाठादि–वषट्कृते तावत् ॥ प्रदानानि ॥ कलशे अग्नयेनमः ६ उद्वयन्तमस ६ ॥ भवान्यै १० ततस्त्रयोदशकलशेषु प्रत्येकस्य द्वे द्वे ऋचो उदुत्यञ्जा॰ । चित्रन्देवानां॰ १ ॥ अपत्ये तां॰ ॥ विवस्व आदित्यैष ते सोमपीथस्तस्मिन्मन्दस्व । या दिव्या वृष्टिस्तया त्वा श्रीणामि २ ॥ अदृश्यन्नस्यं॰ ॥ गायत्रेण प्रतिमिमीते अर्कमर्केन साम त्रैष्टुभेन वाकम् । वाकेन वाकं द्विपदा चतुष्पदाऽक्षरेण

मिमते सप्तवार्णीः । ३ । तरणिर्विश्वं० ॥ धारयन्त आदि-
त्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः । दीर्घ-
धियो रक्षमाणा आसुर्यमृता वा नः च्यवमाना ऋणानि ।
४ । प्रत्यङ्देवे० ॥ सविता पश्चात्तात्सविता पुरस्तात्सवितो-
त्तरात्तात्सविताऽधरात्तात् । सविता नः सुवतु सर्वतातिं
सविता नो रासतां दीर्घमायुः । ५ । येना पावक० ॥ ये ते
अर्यमन्बहवो ६ । विद्यामेषि रजं० ॥ बहिष्टेभिर्विहरन्यासि
तन्तुमवव्ययन्नसि तन्देवं स । दिविष्वतो रश्मयः सूर्यस्य
चर्मेवावधुस्तमो अप्स्वन्तः ७॥ सप्तत्वा हरितो० ॥ सम्पूषन्न-
ध्वनस्तिरव्यंहो विमोचनपात् । सक्ष्वादेवप्रणम्पुरः । ८।
अयुक्त सप्त० ॥ मित्रः संसृज्य पृथिवीं भूमिञ्च ज्योतिषा
सह । सुजातं जातवेदसमऽयक्ष्मत्वा संसृजामि प्रजाभ्यः
। ९ । उद्वयन्तं० ॥ रुद्रः संसृज पृथिवीं बृहज्ज्योतिः समी-
धिरे । तेषां भानुरजस्र इच्छुक्रोदेवेषु रोचते । १० । उद्य-
न्नद्यं० ॥ सप्तत्वा हरितो० ११ शुकेषु मे० ॥ हंसः शुचि-

षर्त् १२ उद्गादयं० ॥ सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ।१३॥ मध्यकलशे ॥ अस्य वामस्य० ॥ सप्त युञ्जन्ति० ॥ इमं रथमधि० ॥ वृषणे यत्ते वृषणौ अर्कमर्चन्निन्द्र ग्रावाणौ अदितिः सोजषा । अनश्वासो ये योपवन्निरथः इन्द्रेषिता अभ्यवर्तन्त दस्यून् । ह्रां ह्रीं सः- सूर्यायनमः ॥ कारणकलशेषुषट्सु । रदत्पथो वरुण सूर्याय पूर्णांसि समुद्रिया नदीनाम् । सर्गो न सृष्टो अर्वतीनृताय श्चकार महीरवनीरहभ्यः । सूर्यायनमः । १ । प्रसम्राजे बृहदर्चा गभीरं ब्रह्मप्रियं वरुणाय श्रुताय । वियोजघान शमितेव वर्मोपस्थिरे पृथिवीं सूर्याय ॥ अरुणायनमः । २ । उपेसस्तृक्षेवाजयोवचसां धानो दधीत नाद्यो गिरो मे । अपान्नपादाशु हेमाकुवित्स सुपेशस्कर ज्योतिषिषद्धि । पराध्यायनमः ॥ ३ ॥ इमं स्वस्मै हृदआसुतष्टं मन्त्रं वोचे मन्थ विदस्यवेदत् । अपान्नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान । करीवृषभायनमः ॥ ४ ॥ आपो रेवती० आपः प्र-

णीत भेषजं वरूथं तन्वं मम । ज्योक्च सूर्यन्दृशे । रुद्रशुक्रा-
यनमः ॥५॥ ततो यमकलशे ॥ यस्य कोष्टजगतः पार्थिवस्यैक
इद्वशी । इमं भङ्गश्रवोगाय यो राजान परोध्यः । १ ॥
यमङ्गाय भङ्गश्रवो यो राजानपरोध्यः । येनापो नद्यो
धन्वानि येन द्यौः पृथिवी दृढा । २ । हिरण्यकेशान्सुधु-
रान्हिरण्याक्षानयः शफान् । अश्वावनश्यतो दानं यमो
राजाऽधितिष्ठति ॥ ३ ॥ यमायनमः ॥ ६ ॥ ततो यथाप्रेतसंख्यं
प्रेतकलशेषु ॥ तिस्रो मातृस्त्रीन्पितृन्बिभ्रदेक ऊर्ध्वस्तस्थौ
नेमवग्लापयन्ति । मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं
वाचमविश्वमित्वा ॥ वेदचतुष्टयीषु । यो रुद्रो ( वा ) वषट्कृते
विष्ण । अग्निमीळे । इषेत्वोर्जे । अग्न आयाहि । शन्नो देवी ।
विष्णुपञ्चायतनदेवताभ्यः नमः । इन्द्रापर्वता । ऐन्द्राग्नं ।
अर्चन्तस्त्वा ॥　　॥ यजमानमानीय ॥　　॥ अनाभौ ।
"उदुत्यञ्जातवे" (पृ. १४१ पं. ११ ) इति सूक्तेन । "चि-
त्रन्देवानां" (पृ. १४२ पं. ११) इति सूक्तेन च । न्यासः ॥

चित्रं पादयोः ॥ अपसर्पन्तु ते भूता ॥ प्राणायामः ॥ ॥ तीर्थे स्वेयं । वीर वीरेश देवेश नमस्तेऽस्तु त्रिधात्मक । महामार्तण्ड वरद सर्वाभयवरप्रद ॥ चाकाभगवत्यै गन्धादि ॥ यत्रास्ति माता । अद्यतावत् भवानी० महागणपतये । अग्नये ६ ह्रांह्रींसः सूर्याय ८ भवान्यै १० प्रभासहिताय आदित्याय सूर्याय १ दीप्तिस–रवये विवस्वते २ प्रकाशास–गभस्तयेऽर्काय ३ मरीचिस–भानवे आदित्याय ४ तापनीस–सवित्रे सवित्रे ५ पाचनीस–दिवाकरायाऽर्यम्णे ६ हव्यवाहास–धर्मराजाय सहस्ररश्मये ७ तेजोवतीस–तपनाय पूष्णे ८ शतधामास–भास्कराय मित्राय ९ वरुणधामास–सूर्याय भानवे १० पद्मगर्भास–त्वष्ट्रे हरिद्रथाय ११ छायास–खर्पतये हंसाय १२ निष्कलास–महामार्तण्डनाथाय १३ सूर्याय॑ अरुणाय॑ पराध्र्याय॑ करीवृषभाय॑ खशुल्काय॑ यमाय॑ ॥ प्रेतभर्गाणां विष्णवे ( वा ) रुद्राय सानुचराय पृथिव्यै अग्नये ऋग्वे-

दाय ब्रह्मणे छन्दोभ्यः । अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छन्दोभ्यः । दिवे सूर्याय सामवेदाय ब्रह्मणे छन्दोभ्यः । दिग्भ्यः चन्द्रमसे अथर्ववेदाय ब्रह्मणे छन्दोभ्यः ॥ वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः । इन्द्राय वज्रहस्ताय तेजसे चण्डाय दीपोनमः ॥ अपसव्येन ॥ समस्तमातापितृभ्यः । दीपः स्वधा ॥ सव्येन । अद्यतावत् । पित्रे भर्गाय । समस्तप्रेतभर्गेभ्यः सूर्यमण्डलप्राप्त्यर्थे भर्गश्राद्धे दीपोनमः ॥ संवः सृजामि० । अश्विनोः । देहवद्देवन्यासः ॥ ॐभूः पुरुषमावा ३ । आदि ३ भास्क ३ विश्व ३ योगी ३ सूर्य ३ नमो ध ३ घृणिः ३ अद्यतावत् भवानी० महागणपतेः अग्नेः ६ ह्रांह्रींसः सूर्यस्य[१] । भवान्याः[१] । प्रभासहितस्यादित्यस्य सूर्यस्य[१] । दीप्तिस–रवेः विवस्वतः[२] । प्रकाशास–गभस्तेः अर्कस्य[३] । मरीचिस–भानोरादित्यस्य[४] । तापनीस–सवितुः सवितुः[५] । पाचनीस–दिवाकरस्यार्यम्णः[६] । हव्यवाहास–धर्मराजस्य

सहस्ररश्मेः । तेजोवतीस–तपनस्य पूर्णः । शतधामास-
भास्करस्य मित्रस्य । वरुणधामासहितस्य सूर्यस्य भानोः[११] ।
पद्मगर्भास–त्वष्टुः हरिद्रथस्य[११] । छायास–स्वर्पतेः हंसस्य[१२] ।
निष्कलास–महामार्तण्डनाथस्य[१३] । सूर्यस्य अरुणस्य परा-
र्थ्यस्य[३] करीवृषभस्य खशुल्कस्य यमस्य[८] । समस्तप्रेतभर्गाणां ।
विष्णोः (वा) रुद्रस्य सानुचरस्य । पृथिव्याः अग्नेः । विष्णु-
पञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य । तेजसः चण्डस्य ।
आत्मनो पितुर्भर्गस्य (पृ. १४४ पं. १०) सूर्यबलिविधा-
नसङ्कल्पितभर्गश्राद्धे कलशपूजनं सूर्यपूजनं, कारणपूजनं
चतुर्वेदेश्वरग्रहमण्डलक्षेत्रेश्वरपूजनमहं करिष्ये । तिलसर्ष-
पयवान्विकीर्य ॥ एवमासनं अपत्येतां० आकृष्णेनं० ध्रुवा-
द्यौ[३]० ह्रांह्रींसःसूर्यस्य इदमासनं नमः ॥ महागणपतेः०
तेजसः चण्डस्येदमासनंनमः ॥ महागणपतये । अग्नये ।
ह्रांह्रींसःसूर्याय । भवान्यै[१०] ॥ प्रभास–आदित्याय । तेजसे
चण्डाय युष्मान्वः पूजयामि ॐपूजय । उदुत्यञ्जातं० ह्या-

म्यग्निं० । महागणपतिं । अग्निं । ह्रांह्रींसः सूर्यं । भवानीं । प्रभासहितमादित्यं सूर्यं[१] । दीप्तिस० रविं विवस्वन्तं[२] । प्रकाशास० गभस्तिं अर्कं[३] । मरीचिस० भानुं आदित्यं[४] । तापनी–सवितारं सवितारं[५] । पाचनीस० दिवाकरं अर्यमाणं[६] । हव्यवाहास० धर्मराजं सहस्ररश्मिं । तेजोवतीस० तपनं पूषणं[८] । शतधामास० भास्करं मित्रं[९] । वरुणधामास० सूर्यं भानुं[१०] । पद्मगर्भास० त्वष्टारं हरिद्रथं[११] । छायास० स्वर्पतिं हंसं[१२] । निष्कलास० महामार्तण्डनाथं[१३] । सूर्यं अरुणं पराध्र्यं करीवृषभं खशुल्कं यमं[६] । समस्तप्रेतभर्गान् विष्णुं सानुचरं पृथिवीं अग्निं ऋग्वेदं ब्रह्माणं छन्दांसि । विष्णुपञ्चायतनदेवताः इन्द्रं वज्रहस्तं तेजसं चण्डं आवाहयिष्यामि ॐआवाहय ॥ आवाहयाम्यहं देवं भानुं सर्वजगद्गुरुम्० । एहि सूर्य० । त्रैलोक्यं भू० ॥ ब्रह्माण्डगे० ॥ त्रयोदशकलशेषु । प्रभया सहितं देवमादित्यं तपतां वरम् । आवाहयामि यज्ञेऽसि-

हः-अस्त्राय-,हौंनेत्रत्रयायवौषट्, हैंकवचा-,हूंशिखा-,हीं शिर-,हां
हृदयायनमः* ॥ धूपं रत्नदीपं च, "ॐह्रींपरब्राह्मे चतुर्विंद्ये
योगधारिणि आत्मे अन्तरात्मे परमात्मे रुद्रशक्ते रुद्रद-
यिते मे पापं दह २ सौम्ये सदाशिवेहूंफट्स्वाहा" इति
दद्यात् ॥ अथ घण्टावादनम् ॥ ॐह्रींहूंसिद्धिसाधिनि ॐह्रींहूं
शब्दब्रह्मस्वरूपिणि ॐह्रींहूंसमस्तबन्धनिकृन्तिनि ॐह्रींहूं-
शिवसद्भावजननिस्वाहा ॥ ॥ "अथ शिविकापूजा" ॥
शिविकामानीयाऽस्त्रेण "फट्प्रोक्षणंकरोमिफट्" इति प्रोक्ष-
णम् । तस्या उपरि तिलदर्भानास्तीर्य पञ्चगव्येनचाऽभ्युक्ष्य ।
पुनरस्त्रेण प्रोक्ष्य कवचेनाऽवगुण्ठ्य "ॐह्रींश्रींहूं" इति शिवि-
कामध्ये लिखेत् । ऊर्ध्वं, सःशिवतत्त्वायनमः, मध्ये जुंविद्या-
तत्त्वाय० । अधः ॐ आत्मतत्त्वायनमः॥ ("शाखासु) नवतत्त्व-
पूजा" ॥ शिरसि शिवतत्त्वायनमः, आग्नेये सदाशिवत, दक्षिणे
ईश्वरत, नैर्ऋते विद्यात,-पश्चिमे मायात,-वायवे कालत,-
उत्तरे नियतित, ईशाने पुरुषत,-मध्ये प्रकृतितत्त्वायनमः ॥

"शिखाशाखासु" । निवृत्तिकलायैनमः, प्रतिष्ठाक-,विद्याक-शान्ताक-,शान्त्यतीतकलायैनमः॥ (शिबिकामध्ये) हुंकारमभ्यर्च्याऽऽसनपूजां कुर्यात् ॥ आसनायनमः आधारशक्त्यै पृथिव्यै अनन्ताय धर्माय ज्ञानाय वैराग्याय ऐश्वर्याय अधर्माय अज्ञानाय अवैराग्याय अनैश्वर्याय ऋग्वेदाय यजुर्वे-सामवे-अथर्ववे । कृतयुगाय त्रेतायु-द्वापरयु-कलियु-अधच्छादनाय मध्यच्छा-,ऊर्ध्वच्छा-,सत्त्वाय रजसे तमसे आत्मतत्त्वाय विद्यात-शिवत-इच्छाशक्तये ज्ञानश-क्रियाश-ब्रह्मणे विष्णवे रुद्राय केसरेभ्यो पत्रेभ्यो कर्णिकायै सोममण्डलाय सूर्यम-वह्निम-सदाशिवमहाप्रेतासनायनमः॥ "ततः शवं शिबिकायामुत्तानं संस्थापयेत्" ॥ (अत्रैव,) दक्षिणाग्रान्दर्भानास्तीर्य "अपसव्येन" अद्य–पितः अन्त्येष्टिकर्मनिमित्ते एष ते बौद्धः पिण्डस्तृप्तयेऽस्तु । (अर्धपथे) मकरध्वजः पिण्डः । (श्मशाने) यमदूतः पिण्डः ॥ गुरुरस्त्रवार्धानीजलैरग्रे "ॐह्रींहूं" इति अस्त्रमन्त्रेणभूपथं प्रोक्षयन् । यस्य कोष्ठजगतः

पार्थिवस्यैकाय इद्दशी । यमं भङ्गश्रवोगाय यो राजा न परोद्याः ॥१॥ यमंगाय भङ्गश्रवो यो राजान परोद्याः । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा ॥ २ ॥ हिरण्यकेशान्मधुरान्हिरण्या काणया शफान् । अश्वा वनस्य तं दानं यमो राजाऽधितिष्ठति" इति यमसूक्तं, बहुरूप गर्भादि पठन् ॥ शिबिकां श्मशानेदक्षिणशिरसमऽवतारयेत् ॥ तत्र भूमिशोधनं कृत्वाग्नेयेऽष्टदलकलशे प्रधानं । यमो दाधार पृथिवीं । १ । अग्निष्वात्तानृतामतो हवामहे नराशंसो सोमपीथं य आनशुः । त आगमन्त त इह श्रवन्तु अधिब्रुवन्तु ते अवन्त्वस्मान् ॥ २ ॥ ( अन्त्येष्टौ नवश्राद्धेषु कलशं तत्र वर्जयेत् ) इति लोगाक्षिवचनात्कलशस्थापनं नास्ति ॥ तीर्थे स्नेयं । अद्यतावत् पितः पराचीकर्मनिमित्तं एष ते धूपः ॥ यमाय अग्निष्वात्तादिभ्यः गन्धार्घादि-दक्षिणान्तम् ॥ पात्रं तिला । आदौ पञ्च । सावित्राणि "स्थालीपाकस्य" यमाय "अक्षतचरौ" अग्निष्वात्तादिभ्यः

पितृभ्यः जुष्टं निर्वपामि । आज्यभागान्ते । प्रधानं ॥ यमो-
दाधारं ॥ (स्वाहास्थाने स्वधा स्थापयेत्) अग्निष्वात्ता । २ ॥
ऋतुतिथिः । इळाभागान्तं कृत्वा ॥ (अथ शैवी) "सप्रणामं
श्मशानभैरवस्य ध्यानं कुर्यात्" ॥ यथा सव्येन ॥ पाणिभ्यां
परितः प्रपीड्य सुदृढं निश्चित्य निश्चित्य च, ब्रह्माण्डं स-
कलं पचेलिमरसालोच्चैः फलाभं मुहुः । पायं पायमुपाय-
तस्त्रिजगतीमुन्मत्तवत्तैरसैर्नित्यं ताण्डवडम्बरेण विधिना
पायान्महाभैरवः ॥ ॥ ईशाने सिन्दूरेणाऽष्टदलपद्मत्रयमु-

अस्त्रकलशं भैरवकलशं शक्तिकलशं

मुण्डयागं

लिख्य, तदधो (मुण्डयागं) नवकोष्टान्तरस्थिताऽष्टदलपद्मेषु बहिः सबिन्दुत्रिकोणयुताऽष्ट कलशेषु मध्ये, पद्माष्टके भैरवाष्टकं, रक्तदीपयुतत्रिकोणाष्टके मातृकाष्टकं मध्यपद्मे बहुरूपभैरवयुतं च पूजयेत् ॥ ॥ आग्ने-
य्येऽग्निकुण्डं नैर्ऋते मायाजालं वायुकोणे चितां चतुर्हस्तां

हस्तद्वयविस्तीर्णां लिखेत् ॥ पद्मत्रयाणां पत्रेषु आसनं पूजये-दुत्तराननो गुरुः ॥ "आधारशक्त्यैनमः पृथिव्यै, क्षीरार्णवाय, बीजाङ्कुराय, पद्मासनाय, प्रेतासनाय, प्रणवासनाय, उन्मनायनमः" ॥ तेषु कलशत्रयं संस्थाप्य। एवं मुण्डयागपद्मेषु चासनपूजां विधाय घृतदीपाष्टकं मध्यकलशे बहुरूपभैरवं च संस्थाप्य, "स्वदक्षेऽन्यपात्रेऽस्त्रार्घ्यपात्रं पूजयेत् ॥ "गः अस्त्राय" इत्यादि-(पृ.२१२पं.७) प्राणायामः। इत्यन्तं कृत्वा* "ईशानेऽस्त्रकलशप्रधानं ॥ ॐश्लींपशु०" इत्यादि–(पृ.२१७ पं. ८) सर्वमंत्रचक्रतृप्तिरस्तुस्वाहावौषट्, *इत्यन्तं कृत्वा ॥ "मुण्डयागप्रधानम्" ॥ मध्ये भैरवं सवक्त्रं साङ्गं मायादेवीं च पूजयेत् ॥ (आदौ द्वारपूजा)। सव्ये, गङ्गायैनमः। वामे, यमुनायै। स्ववामे, गुरवे, परमगुरवे, परमेष्ठिगुरवे, परमाचार्याय, आद्यसिद्धेभ्योनमः ॥ (पद्मपत्रेष्वासनं पूजयेत्)। अनन्तायनमः, धर्माय, अधर्माय, ज्ञानाय अज्ञानाय, वैराग्याय, अवैराग्याय, ऐश्वर्याय (इत्य-

भ्यर्च्य मध्ये ध्यायेत् )॥ सितं त्र्यक्षं पञ्चवक्त्रं दशबाहुं सशक्तिकम् । शूलाक्षसूत्रेषुखड्गवरैर्दक्षकरैर्वृतम् । मातुलुङ्गधनुश्चर्मकुम्भदर्पणवामकैः । वृत्तं नवात्मना पूज्यं मायादेवीस्वधान्तरम् ॥ ऐँबहुरूपभैरवायस्वधानमः । लंसद्योजातवक्त्रायनमः । वंवामदेववक्त्राय,-रंअघोरव,-यंतत्पुरुषव,-क्षंईशानवक्त्रायनमः । ॐहूंनिष्कलस्वच्छन्दभैरवायनमः । हःअनन्तशक्तये अस्त्रायफट्, हौंअलुप्तशक्तयेनेत्राभ्यां, हैंस्वतन्त्रताकव, हूंअनाधिबोधशिखा, हींतृप्तिशिर, हांसर्वज्ञता हृद ॥ ह्रींमायादेव्यैस्वधानमः ॥ हामित्यङ्गानि ॥ तेषु कलशेषु वैपरीत्येनेशानादि—पूर्वान्तं भैरवाष्टकं रत्नदीपाष्टकेषु मात्रष्टकं पूजयेत् ॥ ईशाने, संहारभैरवायनमः, उ, भीषणभै, वायवे, कपालेशभै, पश्चिमे, उन्मत्तभै, नैर्ऋते, क्रोधराजभै, द, चण्डभै, आ, रुरुभै, पूर्वे, असिताङ्गभैरवायनमः ॥ ईशाने । ॐह्रींश्रींशंमहालक्ष्म्यैस्वधानमः । उत्तरे । ॐह्रींश्रीं यंचामुण्डायै,वायवे ॐह्रींश्रीं । पंवाराह्यै । पश्चिमे,ॐह्रींश्रींतं ऐन्द्र्यै,

नैर्ऋते । ॐह्रींश्रींटंवैष्णव्यै, दक्षिणे, ॐह्रींश्रीं चंकौमार्यै, आग्नेये, ३कं माहेश्वर्यै, पूर्वे, ३ अंब्राह्म्यैस्वधानमः ॥ नैवेद्यं, गुडादि । अमृतेशमुद्रया अस्त्राय शक्त्यै शिवकलशदेवताभ्यः ३ संहारभै,-भीषणभै,-कपालेश, उन्मत्त,-क्रोधराज,-चण्ड,-रुरु,-असिताङ्गभैरवाय । ८ । महालक्ष्म्यै, चामुण्डायै, वाराह्यै, ऐन्द्र्यै, वैष्णव्यै, कौमार्यै, माहेश्वर्यै, ब्राह्म्यै ८ मायादेवीसहिताय बहुरूपभैरवायठःठःठः द्रव्यस्वरूपिणे नमोनैवेद्यं ॥ नमोस्तु सर्वयोगिभ्य(पृ. २२६पं.८) इति पुष्पं। (यजमानमानीय) ॥ *"ॐनमः पादयोः (पृ.२३१पं.१४) इत्यादि–ह्रांहृद" इत्यन्तं न्यासं कृत्वा। ह्रः अस्त्रा-ह्रौंनेत्र-ह्रैंकव, ह्रूं, शिखा, ह्रींशिर, ह्रांहृद, ॥ फट् अस्त्राय, ज्यौंनेत्र, हूंकव, ईं, शिखा, व्यौंशिर-जुंहृद । यअस्त्रा, वानेत्र, शिकव, मः शिखान. शिरसेस्वाहा, ॐ ह ॥ इष्टदेवीन्यासः ॥ *अपसर्पन्तुते० । प्राणायामः ॥ नौमिस्वात्मप्रकाशमित्यादि (पृ.२२७) अद्यतावत् अस्त्राय, शक्तये, भैरवाय, संहारभै,-भीषण-कपालेश,-

उन्मत्त,-क्रोधराज,-चण्ड,-रुरु,-असिताङ्गभैरवाय ८ महालक्ष्म्यै, चामुण्डायै, वाराह्यै, ऐन्द्र्यै, वैष्णव्यै, कौमार्यै, माहेश्वर्यै ब्राह्म्यै, मायादेवीसहिताय, बहुरूपभैरवाय, मुण्डयागदेवताभ्यः धूपोनमः ॥ अपसव्येन ॥ अद्यतावत् पित्रे भैरवगोत्राय रुद्राय धूपः स्वधानमः ॥ सव्येन ॥ तन्महेशायवि ३ । अग्निष्वात्तेभ्यो ३ यमान्तकायैवि ३ ॥ अद्यतावत् अस्त्रस्य शक्त्याः भैरवस्य । संहारभैरवस्य,-भीषण-, कपालेश,-उन्मत्त,-क्रोधराज,-चण्ड, रुरु,-असिताङ्गभैरवस्य ८ । महालक्ष्म्याः, चामुण्डायाः, वाराह्याः, ऐन्द्र्याः, वैष्णव्याः, कौमार्याः, माहेश्वर्याः, ब्राह्म्याः ८ मायादेवीसहितस्य बहुरूपभैरवस्य । आत्मनो॰पितुर्भैरवगोत्रस्य रुद्रस्य वा मातुः भैरवगोत्रायाः रुद्राण्याः परलोके प्रकाशप्राप्त्यर्थं शिवसायुज्यार्थं अस्त्रशक्तिभैरवकलशपूजनं मुण्डयागकलश देवतापूजनमर्चामहं करिष्ये ॥ एवमेव षष्ठ्यासनम् ॥ अस्त्राय शक्तये भैरवाय । संहारभैरवाय ८ महालक्ष्म्यै ८ मा-

यादेवीसहिताय बहुरूपभैरवाय युष्मान्वः पूजयामि । अस्त्रं शक्तिं भैरवं । संहारभैरवं ८ महालक्ष्मीं चामुण्डां वाराहीं ऐन्द्रीं वैष्णवीं कौमारीं माहेश्वरीं ब्राह्मीं ८ मायादेवीसहितं बहुरूपभैरवमावाहयिष्यामि ॥ "फट्अस्त्रायफट्"। लाजाश्च ॥ अस्त्राय शक्तये, भैरवाय, संहारभैरवाय ८ पाद्यं स्वधानमः ॥ "फट् अस्त्रायफट्" । आपःक्षीरं ॥ अस्त्र, शक्ते, भैरव । संहारभैरव ८ महालक्ष्मीः चामुण्डे वाराहि ऐन्द्रि वैष्णवि कौमारि माहेश्वरि ब्राह्मि ८ मायादेवीसहितबहुरूपभैरव ॥ इदं वोऽर्घ्यंस्वधानमः । अस्त्रायेति गन्धार्घपुष्पादि दक्षिणान्तम् । तिलाक्षतैर्देवीदीपान्पूजयेत् ॥ (*नमोस्तुते महादेवि सर्वोपद्रवनाशिनि । इच्छारूपे स्वभावस्थे नित्ये नित्यात्मके शिवे ॥ कलाकलङ्करहिते भावाभावान्तमध्यगे । अव्यक्ते कलनातीते शान्ते नित्योदिते परे[२] ॥ लयोदयविनिर्मुक्ते नित्यतृप्ते निराश्रये । शक्तिबीजस्वभावस्थे चण्डि कापालिनीश्वरि[३] ॥ स्वाहा-

कारे स्वधाकारे परिपूर्णे कृपापरे । त्वं देवि : सर्वदेवानां व्यापकत्वेन संस्थिता ॥ त्वया व्याप्तमिदं सर्वं भूतसर्गं चराचरम् । अद्यास्माकं हितार्थाय सन्निधानं कुरु प्रभो ॥ रक्तायैनमः काल्यै चण्डाक्ष्यै महोच्छ्वासायै करालिन्यै दन्तुरायै, भीमवक्त्रायै महाबलायै ज्वालामुख्यै उमायै महालक्ष्म्यैनमः ॥ अपसव्येन । यमान्तकायै वि-कालरात्र्यै धी-तन्नश्चण्डीप्र- ३ । अद्यतावत् पितुःभै पराचीकर्मनि- परलोके प्रकाशप्राप्त्यर्थं शिवसायुज्यार्थं) *ईशाने महालक्ष्मी दीपं परिकल्पयामिनमः ॥ * सव्येन । (नमोस्तुते० । अपस- व्येन । यमान्तकायै वि ३ । ) उत्तरे चामुण्डादीपं[2] । वायवे वाराहीदीपं[3] । पश्चिमे ऐन्द्रीदीपं[4] । नैर्ऋते वैष्णवीदीपं परिक-[5] । दक्षिणे कौमारीदी-[6] । आग्नेये माहेश्वरीदी-[7] । पूर्वे ब्राह्मीदीपं परिकल्पयामिनमः ॥ "ततोऽक्षय्यं च, एवं पृथक् २" ॥ अद्यतावत् पितुःभैर-पराची-अस्त्रकलशप्रीत्या-परप्रकाशप्रा- प्तिरस्तु अस्त्रः प्रीयतां प्रीतोस्तु ।१। एवं । अद्यतावत् शक्तिः

प्री-॥ भैरवः ³प्री- ॥ तत ईशानादिपूर्वान्तानां सशक्तिकभैरवा-
ष्टकानां चाऽक्षयं ॥ अद्यतावत् पितुः भै-पराची-महालक्ष्मी-
सहितसंहारभैरवप्रीत्या—परप्रकाशप्राप्तिरस्तु महालक्ष्मीस-
हितसंहारभैरवः प्रीयतां प्रीतोस्तु ॥ एवं । चामुण्डास-भीष-
णभै-[2]॥ वाराहीस-कपालेशभै-[3]॥ ऐन्द्रीस-उन्मत्तभै-[4]। वैष्ण-
वीस-क्रोधराजभै-[5]॥ कौमारीस-चण्डभै-[6]॥ माहेश्वरीस-रुरु
भै-[7]॥ ब्राह्मीसहितोऽसिताङ्गभैरवः प्रीयतां प्रीतोस्तु॥ "सव्ये-
न" ॥ एता देवताः ॥ "अथ मायाजालमुल्लिख्यपूजा" ॥
('उक्तं च' । सप्तावरकमध्ये तु हंसतन्नाममूर्धनि । ऋॠ-
ऌॡ च तद्बाह्ये तद्बहिर्द्वादशस्वराः ॥ १ ॥ आवर्तानां
चतुर्णां तु कुर्यादष्टदलं ततः । कटपयाश्च पूर्वे तु चतङ-
शास्तथाऽनले ॥ २ ॥ खठफरा दक्षिणे तु छथञषास्तु
नैर्ऋते । गडबलाः पश्चिमे तु जदणसास्तु वायवे ॥ ३ ॥
घढभवाश्चोत्तरे तु ईशाने झघनक्षमाः । रक्तवर्तियुतं दीपं
दध्यान्नामाक्षरोपरि ॥ ४ ॥ मायाजालस्य पूर्वादि हेर-

कादींश्च पूजयेत् । आमर्दकं च कङ्कालं भीमराबाऽट्टहासकम् ॥ ५ ॥ करवीरं करङ्काख्यं कालग्रासं कुलेश्वरम् । मायाजालक्रमेणाऽऽशु जीवमाकृष्य चार्चयेत् ॥ ६ ॥

हेरक १
आमर्दक १
त्रिपुरान्तक २
दीप्तिकङ्काल २
अग्निवेताल ३
भीमराव ३
हाटकेश्वर ७
कालग्रास ७
राजराजेश्वर ८
कुलेश्वर ८
ॐ हंसः
अमुकाणुः
रत्नदीपं

मध्येरत्नदीपं बहिःक्षेत्रपालाष्टकं विधाय कर्णिकायां आसनपूजा ॥ "आसनायनमः, अनन्ताय, आधारशक्त्यै, पृथिव्यै, धर्माय, अधर्माय, ज्ञानाय, अज्ञानाय, वैराग्याय, अवैराग्याय, कर्णिकायै, शतदलपद्मासनाय सहस्रदल-पद्मासनायनमः" ॥ तदुपरि द्रव्यपूर्णपात्रेमायादेवीं ध्यात्वा पूजयेत् ॥ परमेश्वरोत्सङ्गस्थां मायादेवीं नवयौवनावस्थाम् । श्यामां स्मेरमुखपद्मां द्विकराभ्यां स्वीकृतपाशाङ्कुशध-राम् ॥ ॐह्रींपरमेश्वरोत्सङ्गस्थायै मायादेव्यै स्वधानमः ॥ ह्रामित्यङ्गानि ॥ ( बहिः क्षेत्रपालाष्टकेपूर्वादि ईशानान्तं ) । पूर्वे, आमर्दकायनमः । आग्नेये, कङ्कालाय । दक्षिणे, भीम-रावाय । नै, अट्टहासाय प, करवीराय । वा, करङ्काख्याय । उत्तरे, कालग्रासाय । ईशाने, कुलेश्वरायनमः ॥ गुडादि नैवे-द्यम् । मायादेव्यै-आमर्दकाय ८ ठःठःठःद्रव्यस्वरूपिणेनमो निवेद्यं ॥ नमोऽस्तु सर्वयोगिभ्यः ॥ *नौमि स्वात्मप्रका (पृ.२२७) अद्यतावत् मायादेव्यै आमर्दकाय ८ धूपोनमः ॥

"अपसव्येन" अद्यतावत् पित्रे भैरवगो-पराचीक-धूपः स्वधानमः ॥ "सव्येन" । तन्महेशायवि ३ अग्निष्वात्तेभ्यो ३ यमान्तकायैवि ३ मध्ये मायादेव्याः आमर्दकस्य कङ्कालस्य ८ आत्मनो-पितुः भैरव-अन्त्येष्टिक-प्रकाशपदवीप्राप्त्यर्थं मायाजालपूजनमर्चामहं करिष्ये ॥ मध्ये मायादेव्याः आमर्दकस्य ८ इदमासनंनमः ॥ मध्ये मायादेव्यै आमर्दकाय ८ युष्मान्वः पूजयामि मध्ये मायादेवीं आमर्दकं ८ आवाहयिष्यामि ॥ "फट् अस्त्राय फट्" लाजाश्च । मध्ये मायादेव्यै आमर्दकाय ८ पाद्यंनमः ॥ फट् अस्त्राय फट् । आपःक्षीरं । मध्ये मायादेवि, आमर्दक ८ इदं वोऽर्घ्यंनमः ॥ एवं गन्धार्घपुष्पादिदक्षिणान्तम् ॥ तिलाक्षतैर्मध्येदीपपूजा ॥ नमोस्तुते महादेवि (पृ.२४०–११)अघोरेश्वरीदीपं परिकल्पयामि नमः ॥ अक्षय्यं । अद्यतावत्-पितुः भैर-पराचीक-मायादेवीप्रीत्या प्रकाशप्राप्तिरस्तु मायादेवी प्रीयतां प्रीताऽस्तु ॥ सव्येन । अद्यतावत्-आमर्दकादिक्षेत्रेश्वराष्टकप्रीत्या-परप्र-

काशप्राप्तिरस्तु आमर्दकादिक्षेत्रेश्वराः प्रीयन्तां प्रीताःसन्तु ॥ एता देवताः ॥ ततो दीक्षितानां निजदेवताजपं कुर्यात् ॥ नामोदीरणं यथा । मायाजालमातृकावर्णात्माख्यमनुः ( अमुको ) जयतु ॥ प्रणम्य विज्ञापयेत् । "मायाजालक्रमानीतजीवार्पणपुरःसरम् । शवं षडध्वसंशुद्धं योजयामि परेपदे ॥ नाथाज्ञां देहि मे तस्मात्त्वदाज्ञापूतमानसः । शक्तोहं जगदुद्धर्तुं शवोद्धारे किमद्भुतम्" ॥ इति मण्डलस्थेन परमेश्वरेण दत्तामाज्ञां भावयन्प्रहृष्टचित्तः कुण्डसमीपं यायात् ॥

"अथाग्निकर्म" ॥ त्रिकोणं चतुष्कोणं वा कुण्डं कृत्वा स्वदक्षेऽस्त्रार्घ्यपात्रं पूजयेत् ॥ ॐश्लींपशुहूंफट् पाशुपतास्त्राय फट् । ॐहृद,-श्लींशिर, पशिखा,-शुकव,-हूंनेत्र,फट् अस्त्रा- ॥ ज्ञानखड्गपूजा ॥ ॐहः फट् षट्त्रिंशत्तत्त्वस्वरूपाय ज्ञानखड्गाय गन्धपुष्पाद्यैः सम्पूज्य ॥ तेनाऽस्त्रार्घ्यपात्रात्कुण्डसंस्काराः ॥ हः फट्प्रोक्षणं करोमिफट्[1] ।-उल्लेखनं[2] ।-मृत्स्नोद्धारणं[3] -।-पूरणं[4] ।-समीकरणं[5] ।-सेचनं[6] ।-कुट्टनं[7] ।-मार्जनं[8] ।-लेपनं[9] ।

मृत्तिकापूरणं-[१०] । हः फट्- अवगुण्ठनं-[११] । हः फट्शोषणंकरोमि फट्[१२] ॥ "कुण्डस्य" ॐ लंक्रियाशक्त्यात्मने कुण्डाय, गन्धादि ॥ ततः कुण्डमध्ये "ॐ हूंफट्वज्रीकरणं करोमिफट्" इत्यनेन पूर्वाग्रैर्दर्भैर्वज्रीकरणं ॥ तस्य ज्ञानखड्गेन "हःफट्प्रोक्षणं करोमि-फट्" लिङ्गमुद्रया "ॐ हैं अवगुण्ठनं करोमिहू" ॥ पञ्चगव्यात् कुण्डस्यपूर्ववद्द्वादशसंस्कारान् ज्ञानखड्गेन ॥ हःफट्प्रोक्षणं करोमि-फट् १२ ॥ स्ववामे पूर्वाग्रदर्भे उत्तराग्रं दर्भं संस्थाप्य चतुष्पथं +कृत्वा तत्र सप्तकाण्डविष्टरं संस्थाप्य "वागीश्यासनाय नमः" इत्यासनं पुष्पेन सम्पूज्य "ॐ जुंभगवतिवागीश्वरि आ-गच्छ २ सन्तिष्ठ २ सन्निधत्स्व २ सन्निरुद्धाभव २ सन्नि-धेहि २ भगवति अवगुण्ठयामिनमः अमृतीकरोमिनमः" ॥ नीलोत्पलदलश्यामामृतुमच्चारुलोचनाम् । सर्वलक्षण-सम्पूर्णां सर्वाभरणभूषिताम् ॥ ध्यात्वा चैवंविधां देवीं स्थापयेत्कुण्डमध्यगाम् । ब्रह्मस्थानोपविष्टां च द्वाराभिमुख-भद्रदाम् ॥ (इति ध्यात्वा पूजा ।) "ॐ ह्रां भगवति वागीश्वरि"

पाद्यं गृहाणनमः । एवं (अर्घ्यं आचमनीयं गन्धं अर्घपुष्पाणि धूपं रत्नदीपं ) गृहाण नमः । ॐहूंवागीश्वर्यैनमः ।। योनि मुद्रां प्रदर्शयेत् ।। ईशानशिरसमुत्तानामृतुमतीं भावयेत् ।। ततोऽग्नि-मानीय । ज्ञानखड्गेन "फट्प्रोक्षणंकरोमिफट् इत्यस्त्रजलेन प्रो-क्षयेत् ।। "फट्निरीक्षणंकरोमिफट्" लिङ्गमुद्रयाऽवगुण्ठनम् ।। फट्अवगुण्ठनंकरोमिफट् ।। पूजा ।। रंज्ञानशक्त्यात्मने अग्नयेनमः गन्धादि ।। पुनरक्षतपुष्पैः । ॐह्रींसाधक २ कह कह-ज्वल २ सर्वधाम सर्वग सर्वेश्वर सर्वभक्षक सर्वमन्त्रा-र्चिषे जय २ भैरवाग्नये पापेन्धनाग्नये कालाग्नये शुद्धते-जसेहूंफट्फट्फट्स्वाहा ।। दर्भकाण्डद्वयं प्रज्वाल्य "फट्क्र-व्यादं निष्कर्षयामि फट्" नैर्ऋते क्षिपेत् ।। तिलाहुतिः ॐरं अग्नेः भैरवाग्नेः क्रव्यादशुद्धिं करोमिस्वाहा ५ । ॐरं भैरवाग्नेः क्रव्यादशुद्धिरस्तुस्वाहा ३ । ॐहूं ज्ञानशक्त्या-त्मने अग्नयेनमः" इति गन्धादिपूजा ।।पूर्वाग्रेण दर्भत्रयेणाऽग्निमा-च्छाद्य "ॐहंअग्नेराच्छादनं करोमिहं" ।ततः कुण्डाद्बहिर्वागीशी

स्थापयेत्, तदनु अग्निपात्रं हस्तद्वयेन गृहीत्वाऽग्नेश्चेतनतयाज्वा-लाग्रं मूलेन गृहीत्वा वामनासापुटेनाग्निं हृदि प्रविश्य स्वचैतन्या-नलेनैकीकृत्य बहिर्दक्षिणनासापुटेन मूलमुच्चार्य (स्वयं) "अह-मेव भैरवः" इति भैरवाभिमानं गृहीत्वा वह्निं शुक्ररूपं ध्यात्वा मायां वागीशीं ध्यात्वा कुण्डोपरि "भ्रामयामिनमः" इतित्रिः परिभ्रम्य "ॐहूंयोजयामिनमः" इति वागीश्या योनौ कुण्डे वह्निं क्षिपेत् ॥ प्रोक्षणं "हःफट्प्रोक्षणंकरोमिनमः" । ततो वागीशीमुपरि दर्भाणि दद्यात् । ॐहूंवागीश्या योनिं प्रच्छादयामिनमः ॥ ततोऽष्टासु दिक्षु दर्भैर्दद्यात् ॐहूं अक्षवाटं करोमिनमः ८ । ततो वागीश्याः "ॐहूंफट् वागीश्याः कङ्कणं बध्नामिनमः इति सप्तदर्भविष्टरं दद्यात् । ततोऽग्नेः पूजाऽक्षतपुष्पैः "ॐहां अग्निगर्भायनमः" गन्धादि । अथ ज्वालालिङ्गोपरिपूजागन्धाद्यैः ॥ ॐह्रींहिरण्यायैनमः ज्रीं कृष्णायै क्रींकनकायै क्षींअतिरिक्तायै फ्रेंसुप्रभायै ॐश्रीं रक्तायै श्रींबहुरूपायैनमः । द्वारपालपूजा ॥ ॐगंगणेशा-

यनमः कुंकुमाराय श्रींश्रियै संसरस्वत्यै लंलक्ष्म्यै वंविश्व-कर्मणे नमः ॥ तिलाहुतिः ॥ ॐरं अग्नेर्गर्भाधानंकरोमि-स्वाहा ३ ॐरं अग्नेर्गर्भाधानं सम्पद्यतांस्वाहा ३ "व्यों अग्ने पुमान्भवनमः" इति कुशाग्रेण जलबिन्दुं क्षिपेत् । "व्यों अग्नये पुंसे नमः" इति गन्धादि ॥ तिलेन व्योंअग्नेःपुं-सवनं करोमिस्वाहा ३ व्योंअग्नेःपुंसवनं सम्पद्यतां स्वाहा ३ ॥ "रं अग्ने विभक्तावयवो भवनमः" इति सम-ग्रमग्निशरीरमुल्लिख्य । रंअग्नेःसीमन्तोन्नयनं करोमिस्वाहा ३ रंअग्नेर्नेत्रत्रयकल्पनां करोमिस्वाहा ३ रंअग्नेःशिरः स्कन्दौ, कटिं, पादौ, सर्वाङ्गानि, कल्पयामिस्वाहा ३ रं अग्नेः सीमन्तोन्नयनं सम्पद्यतां स्वाहा ३ रंअग्निंजीव-यामिस्वाहा ३ "फट्अग्ने प्रसवाभिमुखोभवनमः" कुशाग्रेण जलबिन्दून् । "फट्अग्नयेनमः" इति गन्धादि ॥ तिलाहुतिः । ॐहूं अग्नेर्जातकर्म करोमिस्वाहा ३ एवं सम्प-द्यतां स्वाहा ३ "फट्अग्नेःसूतकशुद्धिर्भवतुस्वाहा"

इत्यस्त्राम्भसा कुण्डपार्श्वानि प्रोक्ष्य ॥ तिलैः फट्अग्नेर्वक्त्रोद्घाटनं करोमिस्वाहा ३ एवं सम्पद्यतां स्वाहा ३ फट् अग्नेर्वक्त्राभिघारं करोमिस्वाहा एवं सम्पद्यतां स्वाहा। ततोऽभ्युक्षेत् ॥ फट्शिवाग्निंपरिसमूहामिफट् ३। फट्शिवाग्निंपर्युक्षामिफट् ३। फट्शिवाग्निंपरिषिञ्चामिफट् ३॥ एवं ९॥ हः फट् अग्निमाऽस्तृणामिफट् ॥ ( पूर्वेत्रयः पुनः पञ्चपश्चापि चोत्तरेत्रयः। प्रक्षेप्या अस्त्रमन्त्रेण ह्याचार्यैर्यज्ञसिद्धये )॥१६॥ ततोविष्टरन्यासः पूर्वे॥ ब्रह्मणेनमः, दक्षिणे रुद्रायनमः, उत्तरे सदाशिवायनमः, पश्चिमे विष्णवेनमः ॥ तिलाहुतिः। ॐहुं वागीश्याः कङ्कणमोक्षंकरोमिस्वाहा ३ एवं सम्पद्यतां स्वाहा ३ सप्तदर्भकाण्डविष्टररूपं पूर्वोक्तकङ्कणं विमुच्य, तिलैः॥ ॐअग्नेर्निष्क्रमणं करोमिस्वाहा ३ एवं सम्पद्यतां स्वाहा ३। ज्यों अग्नेरादित्यदर्शनं करोमिस्वाहा ३ एवं सम्पद्यतां स्वाहा ३ ॥ कुशाग्रैरभ्युक्ष्यन् "ॐजुंसः भैरवाग्निर्भवनमः" इति विज्ञप्य ॥ "ॐजुंसः भैरवाग्नयेनमः" इति गन्धादिः।

तिलैः ॐजुंसःअग्नेर्भैरवाग्निरितिनामकरोमिस्वाहा ३ एवं सम्पद्यतांस्वाहा ३। "रक्तं जटाधरं वह्निं चिन्तयेद्रक्तवाससम्। वामोत्सङ्गगतस्वाहं द्विभुजं रक्तलोचनम्॥ शुकपृष्ठासनं देवं ज्वालाश्मश्रुविभूषितम्। ईदृशं चिन्तयेद्देवं हव्ये कव्ये च पावक"मिति ध्यायेत्॥ इति नामकरणम्॥ पूर्वेब्रह्मणेनमः ब्रह्मन् पाद्यादि गृहाणनमः इति सम्पूज्य। तिलैः। ओंब्रह्मणेस्वाहा ३ "ब्रह्मन् क्षम्यतां" इति पूर्वविष्टरं मोचयेत्॥ अनेन क्रमेण दक्षिणे रुद्रायनमः। २। उत्तरे सदाशिवायनमः। ३। पश्चिमे विष्णवेनमः "विष्णो क्षम्यतां" ४॥ तदनु ॐहूं वागीश्वर्यैनमः। वागीश्वरि पाद्यादि गृहाणनमः। तिलैः। ॐहूंवागीश्वर्यैस्वाहा १० तर्पणं सृष्टिस्थितिलये दक्षे भोगमोक्षप्रदे शिवे। वागीश्वरि नमस्तेऽस्तु गच्छ देवि स्वविष्टपम्। वागीश्वरि क्षम्यतामिति विष्टरंविसृजेत्॥ पुनः भैरवाग्नौ हस्तप्रमाणं चतुर्विंशति "इध्माहोमे" लालानिवारणार्थं॥ "यथा" ॐजुंसः भैरवाग्निं

तर्पयामिस्वाहा २४ ॥ "अथ स्रुक्स्रुवसंस्कारा:" ॥ "अग्नौफट् तापनं करोमिफट्। शिवाम्भसा "फट् प्रोक्षणं करोमिफट्"। लिङ्गमुद्रया "हूं अवगुण्ठनं करोमि हूं" ॥ अग्नौ त्रिर्भ्रामणं "फट्भ्रामणंकरोमिफट्"। "फट्प्रोक्षणं करोमिफट्" ॥ "स्रुक्स्रुवयोर्ज्ञानखड्गाग्रेणाऽग्रस्पर्शः" ॥ पुनः प्रोक्षणं। तापनं। भ्रामणं। "ज्ञानखड्गमध्येन मध्यस्पर्शः"। भ्रामणं। तापनं। मार्जनं। मूलेन मूलस्पर्शः ॥ ततो ज्ञानखड्गपृष्ठे अधोमुखौ स्रुक्स्रुवौ संस्थाप्य, शिवशक्तिरूपौ पूजयेत् ॥ शिवशक्तिभ्यांनमः। गन्धादि ॥ ऊर्ध्वमुखौ कृत्वा। शिवायनमः। शक्तयेनमः। गन्धादि द्वयोर्मूले, आत्मतत्त्वायनमः १। मध्ये, विद्यातत्त्वायनमः २। शिरसि, शिवतत्त्वायनमः ३ ॥ "अथाज्यसंस्कारा:" ॥ शिवाम्भसा "हः फट्प्रोक्षणंकरोमिफट्[1]"। हःफट्अवगुण्ठनं[2] करोमिफट्। हःफट्तापनं[3] करोमिफट्। अथाग्नेयेदिशि दीप्तिस्फुटार्थं। हैंउद्रासनं[4] करोमिफट्। ततो योगौ त्रिर्भ्रामणं। ॐ हः फट् भ्राम-

यामिफट् । अनामिकाङ्गुष्ठाभ्यां विष्टरेण "ॐहः फट्उत्प्लवनं करोमिफट्" । इति संमुखानयनं । "फट् संप्लवनं करोमिफट्" इति पराङ्मुखानयनं । दर्भोल्मुकेनाज्यपात्रवीक्षणं "फट् प्रेक्षणंकरोमिफट् । पुनर्ज्वलद्दर्भोल्मुकेन नीराजनं "फट्नीराजनं करोमिफट्" ॥ अग्नावुल्मुकं प्रक्षिपेत् "फट्पर्यग्नीकरणं करोमिफट्" । पुनः फट्प्रोक्षणं करोमिफट् । अमृतमुद्रयाऽमृतीकृत्य मूलेन साङ्गेन पूजनम् ॥ तत आज्यपात्रमध्ये दर्भद्वयं पूर्वाग्रं संस्थाप्य भागत्रयं नाडित्रयं ध्यायेत् ॥ ॐहूंनाडिकात्रयकल्पनां करोमिनमः ॥ तासां पूजागन्धाद्यैः । दक्षिणे ॐहूंज्ञानशक्तयेनमः । ॐजुंपिङ्गलायैनमः । वामे ॐ ह्रींक्रियाशक्तयेनमः । ॐसःइडायनमः ॥ मध्ये । ॐहां इच्छाशक्तयेनमः । ॐहांसुषुम्णायैनमः ॥ एवं वह्नेरपि भागत्रयं । ॐभैरवाग्नेः भागत्रयकल्पनां करोमिनमः । वह्निदक्षे । ॐजुंसः ज्ञानशक्तयेनमः । ॐजुंसःसूर्यधाम्नेपिङ्गलायैनमः । वह्निवामे । ॐजुंसःक्रियाशक्तयेनमः । ॐजुंसः सोमधाम्ने

इडायैनमः । वह्नि-मध्ये । ॐजुंसः इच्छाशक्तयेनमः । ॐजुंसः वह्निधाम्नेसुषुम्णायैनमः ॥ इति सम्पूज्य, । स्रुवेण होमः । तत्रादौ ( शुक्लपक्षक्रमः ) । आज्यदक्षभागाद्वह्निवाम-भागे ॐजुंसःअग्नयेस्वाहा । आज्यवामभागाद्वह्निदक्षभागे ॐजुंसः सोमायस्वाहा । आज्यमध्यभागाद्वह्निमध्यभागे ॐजुंसः अग्नीषोमाभ्यांस्वाहा ॥ ( कृष्णपक्षे ) आज्यदक्ष-भागाद्वह्निदक्षभागे ॐजुंसःअग्नयेस्वाहा । आज्यवामभा-गाद्वह्निवामभागे ॐजुंसःसूर्यायस्वाहा ॥ आज्यमध्यभागाद्व-ह्निमध्यभागे ॐजुंसःअग्निसूर्याभ्यांस्वाहा ॥ ॐजुंसः अग्नेः प्राशनं करोमिस्वाहा २ एवं सम्पद्यतांस्वाहा ३ । ततोऽग्नेर्नवजिह्वाः पूजयेत् ॥ राज्यार्थदायैनमः[१] । दाहजन-न्यै[२] । मृत्युदायै[३] । शत्रुहारिण्यै[४] । वशीकर्त्र्यैनम्[५] । उच्चा-टिन्यै[६] । अर्थदायै[७] । मुक्तिदायै[८] । सर्वसिद्धिदायैनमः[९] । गन्धादि । पूर्णा । ॐह्रींश्रींभैरवाग्नेर्जिह्वाः कल्पयामिस्वाहा ॥ एतानवजिह्वाः स्रुवेण होमयेत् । ॐराज्यार्थदायैस्वाहा १

पुनः पूर्णा ॐह्रींश्रीभैरवाग्नेर्जिह्वासन्निधिरस्तुस्वाहा ॥ ततो यवतिलादिसम्पाताः ॥ "तेजोसि" ॐह्रांह्रींह्रूंह्रैंह्रौंहः सम्पातं करोमि-"स्वा"इत्यग्नौ "हा" इति यवतिले त्रिवारं ॥ तत आज्यदर्शनम् ॥ (आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् । आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः । दिव्यान्तरिक्षभौमादि यत्ते किल्बिषमागतम् । तत्सर्वमाज्यसंस्पर्शान्निर्नाशमुपगच्छतु ) ॥ आत्मनो-पितुर्भैरवगोत्रस्य रुद्रस्य निर्वाणपदप्राप्त्यर्थं भैरवाग्नये इदमाज्यमर्पयामि नमः ॥ तेजोसि पूर्णा । द्वारेशा नवरन्ध्रगा हृदयको वास्तुर्गणेशोमनः शब्दाद्या गुरवा सुमेरदशकं ता द्वारशक्त्यात्मकम् । चिद्देवोऽथ विमर्शशक्तिसहितः षाड्गुण्यमङ्गावलिर्लोकेशाः करणानि यस्य महिमा तं नेत्रनाथं स्तुमः ॥ ऐं बहुरूपभैरवाय स्वाहावौषट् । १ । पूर्णा । मध्यप्राणनिविष्टहंसपरमा ये रोमकूपाश्रयाः प्राणाः सूक्ष्मविमर्शशालिवपुषः सार्वात्मिकेच्छात्मकाः । तन्मनाग्मतयो विलो-

मयतयः स्वच्छन्दनाथः परो देवोऽसौ विदधातु भैरववपुस्तेजः परं शाश्वतम् ॥ ॐ ह्रींमायादेव्यैवौषट्स्वाहा ॥ ऍं ॐ हूं शिवाग्नेर्गर्भाधानादि चूडान्ताः सर्वे संस्काराः सम्पूर्णाः सन्तु वौषट् स्वाहा । ऍं बहुरूपभैरवाय स्वाहा वौषट् ॥ ३ ॥ तदनु उपयामार्थं ज्ञानखड्गं वामहस्तेगृहीत्वा स्रुवेणाज्यहोमः ॥ ऍं बहुरूपभैरवं तर्पयामिस्वाहा १०८ पूर्णा ऍं बहुरूपभैरवं तर्पयामिस्वाहा ॥ अङ्गानि च होमयेत् । हां हृद,-हींशिर,-हूंशिखा,-हैंकव,-हौं नेत्र,-हः अस्त्रा- ॥ ॐ ह्रींमायादेवींतर्पयामिस्वाहा १०८ पूर्णा । अङ्गानि हांहृदयायनमः ॥ ततो स्वेष्टदेवतां साङ्गां होमयेत् ॥ ततो गणेशादि मन्त्रचक्रं साङ्गं—सर्वमन्त्रचक्रतृप्तिरस्तु स्वाहा वौषट् (पृ.२१८—१४) इत्यन्तंहुनेत् ॥ ॐ ग्लूंगंगणपतयेस्वाहा १०८ गामित्यङ्गानि । पूर्णा । बिभ्रद्दक्षिणहस्तपद्मयुगुले दन्ताऽक्षसूत्रे शुभे वामेमोदकपूर्णपात्रपरशूनागोपवीती त्रिदृक् । श्रीमान्सिंहयुगासनः श्रुतियुगे शङ्खौ वहन्मौलिमान्दिश्यादीश्वरपुत्र

एष भगवांल्लम्बोदरः शर्म नः ॥ ॥ॐग्लूंसःगणपतिवल्ल-भायैस्वाहा १०८ गामित्यङ्गानि पूर्णा । द्विभुजां हसितानननाम्बुजामतिरक्ताम्बरधारिणीं शुभाम् । दधतीमभयं वरं हृदि प्रभजेऽहं गणनाथवल्लभाम् ॥ ॐह्रांह्रींसःसूर्या-यस्वाहा १०८ ह्रामित्यङ्गानि । पूर्णा सूर्यसौवर्णवर्ण मुनिगणनमितं चारुहासं त्रिनेत्रं, रक्ताब्जं स्वर्णकुम्भं सुरुचिरवसनं धारयन्तं भुजाभ्याम् । वामे च्छायासमेतं रथवरवहनं शुक्लवर्णाब्जमध्ये तिष्ठन्तं स्थूलसूक्ष्मं सकल-जननुतं ध्यानकाले भजेऽहम् ॥ ॥ ॐ रांविस्फुरायै-स्वाहा । रामित्यङ्गानि । द्विनेत्रां द्विभुजां देवीं वराऽभ-यलसत्कराम् । पद्मासनां हसद्वक्त्रां सूर्याऽङ्के विस्फुरां स्मरेत् ॥ ॐक्लंक्लांकुमारायस्वाहा । १०८ कामिति । घण्टां सुवर्णरचितां रुचिरां पताकां शक्तिं दधानमपि चारु शिखण्डबर्हम् । भूयात्सदर्तुवदनो भवतां विभूत्यै वक्त्रस्थितिर्वयसि बालतया कुमारः ॥ श्रींश्रियै-

स्वाहा । श्रामित्यङ्गानि । मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मिः प्रसीद सततं नमतां शरण्ये ॥ सांसींसरस्वत्यैस्वाहा । सामित्यङ्गानि । वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां चन्द्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीं सादरम् । वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं दिव्यैराभरणैर्विभूषिततनुं सिंहाधिरूढां भजे ॥ ॐह्रींलक्ष्म्यैस्वाहा । ह्रांह्रीमित्यङ्गानि ॥ कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् । बिभ्राणां वरदाब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां क्षौमाबन्धनितम्बबिम्बयुगलां वन्देऽरविन्दस्थिताम् ॥ ॐवंविश्वकर्मणेस्वाहा १०८ वांवीमित्यङ्गानि । ( अथ स्वधानमोन्तेन संयुतः शतहोमतः । सर्वसाधारणस्तर्प्यो बहुरूपो नवात्मना ) ॐ बहुरूपभैरवायवौषट्स्वधानमःस्वाहा १०८

हांसर्वज्ञताहृ,-हींतृप्तिशिर,-हूंअनादिबोधशिखा,-हैंस्वतन्त्रता-कवचा,-हौंअलुप्तशक्ति नेत्रत्रया,-हःअनन्तशक्तयेऽस्त्रायफट्॥ हींमायादेव्यैस्वाहा । १०८ । हांहीमित्यङ्गानि ॥ परमेश्वरोत्सङ्गस्थां मायादेवीं नवयौवनाम् । श्यामां द्विकरां सितास्यां स्फुरत्पाशाङ्कुशहस्ताम् ॥ वामे खेटकपाशशार्ङ्गविलसद्दण्डं च वीणांतिके बिभ्राणं ध्वजमुद्गरौ स्वनिभदेव्यङ्कं कुठारं करे । दक्षेऽस्यङ्कुशकुन्दुलेषुडमरून्वज्रत्रिशूलाभयान् रुद्रस्थं शरवक्रमिन्दुधवलं स्वच्छन्दनाथं स्तुमः॥ ॐजुंसःअमृतेश्वरभैरवायस्वाहा १०८। ॐजुंहृदयायनमः, ॐव्योंशिर,-ॐईंशिखा, ॐहुंकव, ॐज्योंने, ॐ फट्अस्त्रायफट् ॥ चन्द्रार्धमौलिमतिसुन्दरमादिदेवं पूर्णेन्दुबिम्बवदनं कमलासनस्थम् । पीयूषपात्रकलशाब्जवराभयाढ्यं देवं त्रिनेत्रममृतेश्वरमाश्रयामि ॥ ॐजुंसःअमृतलक्ष्म्यैस्वाहा ॥ ॐजुंहृदयायनमः। पूर्णेन्दुवदनां चन्द्रमुकुटामऽमृतेश्वरीम् । त्रिनेत्रामम्रतेशाङ्कगतां तद्रूपिणीं स्मरे ॥ ॐखड्गायस्वाहा,

खेटकाय, पाशाय, अङ्कुशाय, शराय, पिनाकाय, वराय, अभयाय, मुण्डाय, खट्वाङ्गायस्वाहा, वीणायै, डमरवे, घण्टायै-स्वाहा, त्रिशूलाय, वज्रायस्वाहा, दण्डाय, परशवे, ॐमुद्गराय-स्वाहा ॥ ततः सप्तावरणहोमः॥(पृ.२१९५.१०) कपालेश्वरभै-। इत्यादि। ॐजुंसः हंसः मांपालयपालयसोहंसः जुंॐ । १०८। ॐहृ, जुंशिर,-सःशिखा,-ॐकव,-जुंनेत्र,-सःअस्त्राय फट् ॥ चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं मुद्रापाश-सुधाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् । कोटीरेन्दुगलत्सु-धाप्लुततनुं हारादिभूषोज्ज्वलं कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥ ॐनमःशिवाय १०८ ॐहृ, नशिर,-मः शिखा,-शिकव,-वानेत्र,-यअस्त्रा- । "न"ऊर्ध्ववक्त्रायस्वाहा, 'मः' पूर्ववक्त्राय स्वाहा, 'शि' दक्षिण,-'वा' उत्तर,-'य' पश्चिमवक्त्रायस्वाहा। देवं स्वधा कलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाऽभयदं सुशुभ्रम् । शङ्खाभयाब्जवरभूषितया च देव्या वामेऽङ्कितं शमनभङ्गहरं नमामि ॥

ॐ हूं अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यश्च । सर्वतः शर्व सर्वेभ्यो नमस्ते रुद्ररूपिभ्योहूं सकलस्वच्छन्दभट्टारकभैरवायस्वाहा १०८ ॥ त्रिपञ्चनयनं देवं जटामुकुटमण्डितम् । चन्द्रकोटिप्रतीकाशं चन्द्रार्धकृतशेखरम् । पञ्चवक्त्रं विशालाक्षं सर्पगोनासमण्डितम् । वृश्चिकैरग्निवर्णाभैर्हारेण तु विराजितम् । कपालमालाभरणं खड्गखेटकधारिणम् । पाशाङ्कुशधरं देवं शरहस्तं पिनाकिनम् ॥ वरदाभयहस्तं च घण्टाहस्तं त्रिशूलिनम् ॥ वज्रदण्डकृताटोपं परश्वायुधहस्तकम् । मुद्गरेण विचित्रेण धृतेन तु विराजितम् ॥ सिंहचर्मपरीधानं गजचर्मोत्तरीयकम् । अष्टादशभुजं देवं नीलकण्ठं सुतेजसम् ॥ ऊर्ध्ववक्त्रं महेशानि स्फटिकाभं विचिन्तयेत् । आपीतं पूर्ववक्त्रं तु नीलोत्पलदलप्रभम् ॥ दक्षिणं तु विजानीयाद्वामं चैव विचिन्तयेत् । दाडिमीकुसुमप्रख्यं कुङ्कुमोदकसन्निभम् ॥ चन्द्रार्बुदप्रतीकाशं पश्चिमं तु विचिन्तयेत् । स्वच्छ-

न्दभैरवं देवं सर्वकामफलप्रदम् ॥ ध्यायेद्वै यस्तु युक्तात्मा क्षिप्रं सिद्ध्यति मानवः । पूर्वं या सा मया ख्याता अघोरा शक्तिरुत्तमा ॥ यादृशं भैरवं रूपं तस्यास्तादृशमेवहि । भैरवं पूजयित्वा तु तस्योत्सङ्गगतां स्मरेत् ॥ ईषत्करालवदनां गम्भीरविपुलस्वनाम् । प्रसन्नास्यां सदा ध्यायेद्भैरवीं विस्मितेक्षणाम् ॥ नौम्यऽहंतां परब्रह्ममहिषीं चित्स्वरूपिणीम् । चराचरस्वरूपेण संस्थितां भक्तवत्सलाम् ॥ ॐ ह्रूंनिष्कलस्वच्छन्दभैरवायस्वाहा १०८ ह्रांह्रींह्रूं इत्यङ्गानि । स्वशान्तं निष्कलं शुद्धं सर्वव्यापि निरञ्जनम् । चिद्बोधानन्दगहनं तेजसामाश्रयं भजे ॥ ॐ ह्रींश्रींलक्ष्मीवासुदेवायस्वाहा १०८ ॐ ह्रांह्रीमित्यङ्गानि । पूर्णेन्दुवदनं पीतवसनं कमलासनम् । लक्ष्म्याश्रितं चतुर्बाहुं लक्ष्मीनारायणं भजे ॥ ॐ ह्रांमहालक्ष्म्यैस्वाहा १०८ ह्रामित्यङ्गानि ॥ मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः । क्षीरोदजे कमलकोम-

लगर्भगौरि लक्ष्मीःप्रसीद सततं नमतां शरण्ये ॥ श्रींह्रींक्लींऐंसौः ॐह्रींश्रींकएईलह्रींहसकलहसकलह्रींसौः ॐक्लींह्रींश्रींश्रींमहात्रिपुरसुन्दर्यैस्वाहा १०८ । ह्रांह्रींह्रूं । त्र्यर्णा त्र्यश्रनिविष्टमूर्तिरधिका मुद्रात्रयोद्भासिता या दत्तेऽङ्कुशपाशबाणनिचयं चापं चतुर्भिः करैः । देवीभिस्तिसृभिस्तथाष्टभिरथो दिग्दिक्ष्वनुख्यातिभिर्वस्वष्टप्रमिताभिरष्टभिरथो जीयाज्जगन्मातृका ॥ ऐंक्लींसौःबालायैस्वाहा १०८ । अरुणकिरणजालैरञ्जिताशाऽवकाशा विधृतजपवटीकापुस्तकाभीतिहस्ता । इतरवरकराढ्या फुल्लकल्हारसंस्था निवसतु हृदि बाला नित्यकल्याणरूपा ॥ ॐह्रींदुंदुर्गायैस्वाहा १०८ सव्ये त्रिशूलकरवालमहेषुचक्राण्या शंखखेटकधनुः परितर्जनीया । दत्ते महामहिषदानवपृष्ठसंस्था दूर्वानिभा भवतु साभिमताप्तये नः ॥ सिंहस्था० ॥ ॐक्लींसौः कामेश्वरायस्वाहा १०८॥ कामित्यङ्गानि ॥ चन्द्रकोटिप्रतीकाशं चन्द्रमौलिं त्रिलो-

चनम् । वराऽभयत्रिशूलाऽसिकरं कामेश्वरं भजे ॥ ॐह्रींवद्वद्वाग्वादिनिस्वाहा १०८ ह्रामित्यङ्गानि । सितवर्णालङ्कारे सरस्वति समस्तवाङ्मयाधारे । कमलजमानसवरले मृगाङ्कधवले नमस्तुभ्यम् ॥ ॐह्रींश्रींक्लींभुवनेश्वर्यैस्वाहा १०८ ह्रां । उद्यदिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम् । स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम् ॥ ॐह्रींश्रींहूंफ्रांआंशांशारिकायै स्वाहा १०८ ह्रांश्रामिति ॥ या खड्गं डमरुं त्रिशूलपरशू खट्वाङ्गपाशौ गदा चक्रं मुद्गरचापबाणवरदाभीतिकपालाङ्कुशान् । धत्ते तोमरपुस्तके च मुसुलं दिग्भिस्तथा चाष्टभिर्देवीभिः परिवारिता शशिधरा सा शारिका पातु नः ॥ ॐह्रांवांवामदेवायस्वाहा १०८ ह्रांवामिति । पूर्णेन्दुकोटिप्रभमिन्दुचूडं कपालखट्वाङ्गगदासिहस्तम् । भस्मास्थिमालाञ्चितगात्रमाद्यं श्रीवामदेवं शिवमाश्रयामि ॥ ॐह्रींश्रींशारदाभगवत्यैस्वाहा १०८ ह्रामित्यङ्गानि ॥ षट्-

भुजां त्रिनयनां स्मितवक्त्रां शाण्डिल्यर्षिनुतपदपङ्कजाम् । पर्वते स्थितिमतीं धृतशूलां शारदां भगवतीं हृदि ध्याये ॥ ॐह्रींश्रींरांक्लींसौःभगवत्यैराज्ञ्यैह्रींस्वाहा १०८ ह्रामित्यङ्गानि ॥ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरिगतामुरगोपवीताम् । खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् । ॐह्रींश्रींभूतेश्वरायस्वाहा १०८ ह्रांह्रीमित्यङ्गानि ॥ कुन्देन्दुभासं शशिखण्डचूडं कपालपाशाङ्कुशशूलहस्तम् । त्रिलोचनं भूतिसितं हसन्तं भूतेश्वरं चेतसि चिन्तयामि ॥ ॐह्रींश्रींज्वालामुखि मम सर्वशत्रून्भक्षयभक्षयहूंफट्स्वाहा १०८ ह्रामित्यङ्गानि ॥ ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां ज्वालाडम्बरभूषितां सुवदनां नित्यामदृश्यां जनैः । षट्चक्राम्बुजमध्यगां वरगदाम्भोजाभयान्बिभ्रतीं चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥ ॐह्रांह्रौंमहादेवायस्वाहा १०८ ह्रामित्यङ्गानि । त्रिनेत्रमिन्द्वर्धकिरी-

टरत्नं कल्पान्तसूर्यप्रभमुग्रहासम् । वृषासनं शूलकपालहस्तं वन्दे महादेवमहं चिदीशम् ॥ ॐक्रींक्रींक्रींहूंहूंह्रींह्रींभैंभद्र-कालिभैंह्रींह्रींहूंहूंक्रींक्रींक्रींस्वाहा १०८ भांभीमित्यङ्गानि ॥ क्षुत्क्षामां कोटराक्षीमपि मलिनमुखीं मुक्तकेशीं हसन्तीं नाहं तृप्ता वदन्तीं जगदिदमखिलं ग्रासमेकं करोमि । हस्ताभ्यां धारयन्तीं ज्वलदनलशिखासन्निभं पाशमुग्रद-न्तैर्जम्बूकाफलाभैः परिहरितभयं पातु मां भद्रकाली ॥ ॐहूंहूंमहाकालप्रसीदप्रसीदह्रींह्रींस्वाहा १०८ । ह्रा-मिति ॥ ॐह्रींश्रींक्लींनमोभगवतिमाहेश्वरिअन्नपूर्णेस्वाहा ॥ रक्तां विचित्रवसनां नवचन्द्रचूडामन्नप्रदाननिरतां स्तन-भारनम्राम् । नृत्यन्तमिन्दुशकलाभरणं विलोक्य हृष्टां भजे भगवतीं भवदुःखहर्त्रीम् ॥ सांसींवितस्ताभगवत्यै-स्वाहा । सा मित्यङ्गानि । अक्षसूत्राम्बुजकरामाऽदर्शकलशा-ङ्किताम् । मीनपद्मासनां देवीं वितस्तां वरदां श्रये ॥ ॐ-श्रींगांगींसःगङ्गायैस्वाहा १०८ गां । अभिनवबिसवल्ली पा-

पद्मस्य विष्णोर्मदनमथनमौलेर्मालतीपुष्पमाला । जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः क्षपितकलिकलङ्का जाह्नवी नः पुनातु ॥ ॐह्रींश्रींक्लींहसरक्षमलवयऊं आनन्देश्वरभैरवाय वौषट्स्वाहा । द्वारेशा नव (पृ. २५६–९) (सर्वमन्त्रचक्रतृप्तिरस्तुस्वाहावौषट् । द्वितीया पूर्णा । मध्यप्राणिनि) (पृ. २५६–१३) ऐँ बहुरूपभैरवं सपरिवारं साङ्गं सचक्रं तर्पयामि स्वधानमः वौषट् । तृतीया पूर्णा । ॐहूंन्यूनातिरिक्तविधिं पूरयामि स्वाहावौषट् । इत्याज्यहोमः ॥ ॥ अथयवतिलहोमः ॥ पूर्ववत्पूर्णाद्वयं दत्त्वा । (पृ. २५६–९) "मन्त्रचक्रहोमंकृत्वा" ॥ अथ नरकशुद्धिः ॥ (एतेऽतिनरका घोरास्त्रिकोणाः परिकीर्तिताः । असत्कर्मरतानां च प्राणिनां पातनाय वै) ॥ आज्येन । (ॐहूंहांअमुकाणोः निवृत्तिकलयां पृथ्वीतत्त्वे कूष्माण्डान्तः) अवीचिनरकं शोधयामिस्वाहा १० । (ॐहूंहां) कुम्भीपाकनरकंशो ॥ (ॐ) रौरवनरकं । (ॐ)महारौरवनरकं । (ॐ)पञ्चाशत्कोटिनरकं शोध-

यामिस्वाहा। पूर्णा ॐहूंहां अमुकाणोः पञ्चाशत्कोटिनरकशुद्धिरस्तुस्वाहावौषट् ॥ (अथाज्ञा) ॥ नरकेन्द्रा न युष्माभिरमुकस्य शिवाज्ञया। प्रतिबन्धः प्रकर्तव्यो यातु पदमनामयम् ॥ स्रुवेणाज्यहोमः ॥ ॐह्रींश्रींअंब्राह्म्यैशब्दमर्पयामिस्वाहा १०८। ३ँ कं माहेश्वर्यैस्पर्शमर्पयामि। ३ँ चंकौमार्यैरसम- । ३ँटंवैष्णव्यैरूपमर्प- । ३ँतंवाराह्यैगन्धमर्पयामिस्वाहा। ३ँ पंऐन्द्रयैबुद्धिम- । ३ँ यंचामुण्डायै अहङ्कारम- । ३ँ शंमहालक्ष्म्यै मन अर्पयामिस्वाहा ॥ (अथ शवसंस्काराः ॥) अग्निसमीपे दर्भासनोपरि शवमुत्तराभिमुखं संस्थाप्य ज्ञानखड्गेन सभसाऽस्त्रार्घजलं "हांहींहूंहैंहौंहः" इति शिरसि ताडयेत् ॥ ततः शरीरे पादादि-शिरोन्तं चतुरङ्गुलान्तरेण पुष्पैः पूजयेत् ॥ ॐह्रींसः पृथिव्यैस्वधानमः (एवमूर्ध्वम्) ३ँजलायै, तेजसे, वायवे, ३ँआकाशायै, गन्धायै, रसायै, रूपायै, ३ँशब्दायै, स्पर्शायै, उपस्थायै, ३ँपायवे, पादाभ्यां, पाणिभ्यां, वाचे, घ्राणायै, जिह्वायै, चक्षुषे, त्वचे,

३ँश्रोत्राभ्यां[२०], मनसे[२१], अहङ्काराय[२२], बुद्धये[२३], ३ँप्रकृत्यैस्वधा[२४]-नमः ३ँपुरुषायस्वधानमः[२५] ॥ अथ धारणया प्राणकलां द्वादशान्ते शिवपदे विश्रान्तिमनुभूय सुषुम्णामार्गेण मूलाधारं गत्वा कुण्ड-लिनीमुत्थाप्य तेनैव मार्गेण द्वादशान्तं यावद्गत्वा दक्षनासारन्ध्रेण धूमलेखाकारां विद्याजालरूपां बहिः क्षिपेत् । प्रथमं तेन वर्णा-ध्वनो मध्यनामाऽद्यवर्णरूपं जीवं मनसा ध्यात्वाऽथ शवशरीरे नाभिमारभ्य ब्रह्मरन्ध्रान्तं पुष्पैर्न्यसेत् ॥ (हुंदेवदत्तात्मनेहुं) ॐ-पुरुषतत्त्वायनमः ॥ एवं, नियति[२],-काल[३],-राग[४],-विद्या[५],-कला[६],-माया[७],-शुद्धविद्या[८],-ईश्वर[९],-सदाशिव[१०],-शक्ति[११],-(हुंदेव-दत्तात्मनेहुं) ॐशिवतत्त्वायनमः[१२] ॥ पुनर्त्र्यङ्गुलान्तरेण पादादि-मूर्धान्तं । (ॐहुंअमुकात्मनेहुं) ॐपुरुषतत्त्वायनमः एवं प्रकृति-तत्त्वा[२],-बुद्धि[३],-अहङ्कार[४],-मनो[५],-श्रोत्र[६],-त्वक्[७],-चक्षुस्त[८],-रसना[९],-घ्राण[१०],-वाक्[११],-पाणि[१२],-पाद[१३],-पायु[१४],-उपस्थ[१५]-शब्द[१६],-स्पर्श[१७],-रूप[१८],-रस[१९],-गन्ध[२०],-आकाश[२१],-वायु[२२],-तेजस्त[२३],-जल[२४],-( ॐहुंअमुकात्म-नेहुं)ॐपृथिवीतत्त्वायनमः[२५] ॥ ततो हुनेत् ॥ पृथिव्यैस्वधानमः

स्वाहा[1], । जलाय[2]-तेजसे[3]-वायवे[4]-आकाशाय[5]-गन्धाय[6]-रसाय[7]-रूपाय[8]-स्पर्शाय[9]-शब्दाय[10] उपस्थाय[11]-पायवे[12]-पादाभ्यां[13]-पाणिभ्यां[14]-वाचे[15] घ्राणाय[16]-जिह्वायै[17]-चक्षुषे[18]-त्वचे[19]-चक्षुर्भ्यां[20]-मनसे[21]-अहङ्काराय[22]-बुद्ध्यै[23]-प्रकृतये[24]ॐपुरुषायस्वधानमःस्वाहा[25] ॥ ततः कालादिहोमयेत् ॥ एवं ॐहूंअमुकात्मने हूं ॐकालतत्त्वायनमः[1] स्वाहा । एवं कला[2],-नियति[3],-राग[4],विद्या[5],-मायातत्त्वाय[6]-नमःस्वाहा,-शुद्धविद्या[7],-ईश्वर[8],सदाशिवतत्त्वायनमःस्वाहा[9], शिवतत्त्वायनमःस्वाहा[10] ॥ पुनःशवस्य पुष्पपूजा । ॐहुंअमुकात्मनेहुंॐप्रकृतिपुरुषाभ्यांनमः[1] । एवं बुद्ध्यै[2] अहङ्काराय[3] मनसे[4] श्रोत्राभ्यां[5] त्वचे[6] चक्षुर्भ्यां[7] रसनायै[8] घ्राणाय[9] वाचे[10] पाणिभ्यां[11] पादाभ्यां[12] पायवे[13] उपस्थाय[14] शब्दाय[15] स्पर्शाय[16] रूपाय[17] रसाय[18] गन्धाय[19] आकाशाय[20] वायवे[21] तेजसे[22] जलायनमः[23] ॐहूंअमुकात्मनेहूंपृथिव्यैनमः[24] ॥ पुनः ॐहूंअमुकात्मनेहुं-ॐकालतत्त्वायनमः[1] कलातत्त्वा[2],-नियति[3],-राग[4],-विद्या[5], ॐहूंअमुकात्मनेहूं ॐमायातत्त्वायनमः[6] ॥ पुनः ॐहूंअमुका-

मनेहूंओंमायातं[1],-शुद्धविद्यातं[2]त्त्वाय, ईश्वरं[3]-सदाशिवं[4]तत्त्वायनमः ॥ ॐहूंअमुकात्मनेहूंओंशक्तितत्त्वायनमः[5] ।-शिवतत्त्वायनमः[6] ॥ (सर्वे १०८) ॥ पुनरङ्गुलान्तरेण मालिनीमातृकान्यासः पुष्पैः ॥ ॐक्षंमातृकायैनमः, ॐफंमालिन्यैनमः[2] । ॐहंमातृ-ॐदंमालिन्यै[4] । ॐसं-मातृ-ॐऔंमालिन्यैनमः[6] । ॐषंमातृ-ॐओंमालि[8] । शंमातृ-ऐंमालि[10] । वंमातृ-एंमालि[12] । लंमातृ-नंमालि[14] । रंमातृ-अंमालि[16] । यंमातृ-शंमालिन्यै[18] । मंमातृ-मंमालि[20] । भंमातृ-क्षंमालि[22] । वंमातृ-षंमालि[24] । फंमातृ-हंमालि[26] । पंमातृका-अंःमालि[28] । नंमातृ-संमालि[30] । धंमातृ-आंमालि[32] । दंमातृ-लंमालि[34] । थंमातृ-छंमालि[36] । तंमातृ-पंमालि[38] । णंमातृ-टंमालि[40] । ढंमातृ-रंमालि[42] । डंमातृ-जंमालि[44] । ठंमातृ-अंमालि[46] । टंमातृ-झंमालि[48] । ञंमातृ-ठंमालि[50] । झंमातृ-ढंमालि[52] । जंमातृ-डंमालि[54] । छंमातृ-यंमालि[56] । चंमातृ-भंमालि[58] । ङंमातृ-वंमालि[60] । घंमातृ-अंमालि[62] । गंमातृ-इंमालि[64] । खंमातृ-ङंमालि[66] ।

कंमातृ-घं[६८]मालि । अंःमातृ-गं[७०]मालि । अंमातृ-खं[७२]मालि ।
औंमातृ-कं[७४]मालि । ओंमातृ-चं[७६]मालि । ऐंमातृ-ऊं[७८]मालि ।
एंमातृ-उं[८०]मालि । ॡंमातृ-णं[८२]मालि । लृंमातृ-ईं[८४]मालि ।
ॠंमातृ-धं[८६]मालि । ऋंमातृ-चं[८८]मालि । ऊंमातृ-थं[९०]मालि ।
उंमातृ-ॡं[९२]मा । ईंमातृ-ॡं[९४]मा । इंमातृ-ॠं[९६]मालि । आंमातृ-
ऋं[९८]मालि । ॐअंमातृकायैनमः ॐनंमालिन्यैनमं[१००]ः ॥ स्रुवेणा-
ज्यहोमः "प्रथमं" ॐह्रींहिरण्यायैस्वाहा ॐज्रींकृष्णायै,
ॐक्रींकनकायै, ॐक्ष्रींअतिरक्तायै, ॐसंसुप्रभायै, ॐझ्रीं-
रक्तायै, ॐब्रींबहुरूपायैस्वाहा ॥ ॐब्रह्मणेस्वाहा ॐवि-
ष्णवे ॐरुद्राय, ॐईश्वराय, ॐसदाशिवाय, ॐमहा-
भूतेभ्यः ॐइन्द्राय, ॐयमाय, ॐवरुणाय, ॐसोमाय
स्वाहा ॥ ततः पूर्वोक्तमातृकामालिनीहोमंकुर्यात् ॥ ॐक्षंमातृ-
कायैस्वाहा ॐफंमालिन्यैस्वाहा[१००] । होमान्ते तेजोसि (ॐन-
ऋॠलॡथचधईणउऊबकखगघङइअवभयडढठझञजरट-
पछलआसअःहषक्षमशअंतएऐओऔदफमालिन्यैस्वाहा ।)

(तदनु) नवात्महोमः (फट्हसरक्षमलवयऊँफट्स्वाहा) सहस्रं १००० वा १०० । वा १० हुत्वा । पूर्णा । तेजोसि फट् फट् अमुकस्य पापानि दहामिस्वाहा ॥ ततः कौलिनीन्यासः शवस्य पुष्पैः ॥ स्त्रीणां ह्रस्वस्थाने दीर्घोदेयः ॥ ॐह्रीं श्रींक्लींफेंअं ("स्त्रीणांदीर्घं"आं) देविसुभगे अमुकस्य इतराध्वव्याप्तनिवृत्त्यन्तर्गतधरातत्त्वशोधिनि ह्रींश्रींक्लींफेंकौलिनिनमःस्वाहा, इति गुल्फान्तम् । ॐह्रींश्रींक्लींफेंइं ("स्त्रीणां"ईं) देविईश्वरि अमुकस्य इतराध्वव्याप्तप्रतिष्ठान्तर्गताप्तत्त्वशोधिनि ॐह्रींश्रींक्लींफेंकौलिनिनमःस्वधा, इतिनाभ्यन्तम् ॥ ॐह्रींश्रींक्लींफेंउं (स्त्रीणांऊं) देविऊर्ध्वकेशिनि अमुकस्य इतराध्वव्याप्तविद्यान्तर्गता तेजस्तत्त्वशोधिनि ॐह्रींश्रींक्लींफेंकौलिनिनमःस्वधा, इतिकण्ठान्तम् । ॐह्रींश्रींक्लींफें ऋं ("स्त्रीणां"ॠं) देविविकरालिके अमुकस्य इतराध्वव्याप्तशान्त्यन्तर्गते वायुतत्त्वशोधिनि ॐह्रींश्रींक्लींफेंकौलिनिनमःस्वधा, इतिब्रह्मरन्ध्रान्तम् । ॐह्रींश्रींक्लींफें लृं(लॄं)देवि

सोम्ये अमुकस्य इतराध्वन्याप्तशान्त्यतीतान्तर्गताऽकाश-तत्त्वशोधिनि ॐह्रींश्रींक्लींफें कौलिनिनमःस्वधा, इतिसर्व-व्यापकम् ॥ अदीक्षितस्य तत्त्वशोधनं कुर्यात् ॥ आहुतीनां १०० शतं शतं वा यथाशक्ति आज्याहुतिः श्रेष्ठा तदभावे तिलयवतुण्डलैः ॥ यथादौ पृथ्वीतत्त्वमावाह्य संपूज्य चाहुनेत् ॥

भगवन्पृथ्वीतत्त्वाऽगच्छ २ सन्तिष्ठ २ सन्निधत्स्व २ सन्निधीहि २ सन्निरुद्धोभव २ पृथ्वीतत्त्वाय गन्धादि । ततः पृथ्वीतत्त्वायस्वाहा १०० वा १० "एवं" पृथ्वीतत्त्वाधिपतयेब्रह्मणे ( गन्धादि दत्त्वा ) स्वाहा १०० वा १० पूर्णा ॐहूँ अमुकाणुः सषडध्वपृथ्वीतत्त्वशुद्धोऽस्तुस्वाहा वौषट् ॥ प्रार्थना "भोः ब्रह्मन् भवता नाऽस्य अमुकाणोः शिवाज्ञया । प्रतिबन्धः प्रकर्तव्यो यातु पदमनामय"मिति संश्रावयेत् ॥ एवमप्तत्त्वमावाह्यसंपूज्य च । अप्तत्त्वायस्वाहा १० । अप्तत्त्वाधिपतिं विष्णुमावाह्य सम्पूज्य अप्तत्त्वाधिपतये विष्णवे स्वाहा १० पूर्णा । ॐहूँअमुकाणुः सषडध्वाऽप्तत्त्वशुद्धोस्तु-

स्वाहावौषट् । प्रार्थना । "भोविष्णो भवता नाऽस्येति ॥
तेजस्तत्त्वमावाह्य सम्पूज्य । तेजस्तत्त्वायस्वाहा १० तेज-
स्तत्त्वाधिपतिं रुद्रमावाह्य, तेजस्तत्त्वाधिपतयेरुद्रायस्वाहा
१० पूर्णा ॐहूँ अमुकाणुः सषडध्वतेजस्तत्त्वशुद्धोस्तुस्वाहा
वौषट् । "भोरुद्र भवता नास्येति" ॥ ततोवायुतत्त्वमावाह्य
संपूज्य वायुतत्त्वायस्वाहा १०० वायुतत्त्वाधिपतिमीश्वरं चा-
वाह्यसम्पूज्य, वायुतत्त्वाधिपतये ईश्वरायस्वाहा १० पूर्णा
ॐहूँअमुकाणुः सषडध्ववायुतत्त्वशुद्धोस्तुस्वाहावौषट् ॥
"भोरीश्वर त्वया नास्येति"॥ आकाशतत्त्वमावाह्य आका-
शतत्त्वायस्वाहा १०० आकाशतत्त्वाधिपतिं सदाशिव-
मावाह्य सम्पूज्य । आकाशतत्त्वाधिपतये सदाशिवायस्वाहा
१०० पूर्णा ॐहूँ अमुकाणुः सषडध्वाकाशतत्त्वशुद्धोऽस्तु
स्वाहावौषट् । "सदाशिव त्वया नास्य अमुकाणोः शिवा-
त्तया । प्रतिबन्धः प्रकर्तव्यो यातु पदमनामय"मिति क्षमाप-
येत् ॥ स्रुवेणाज्यहोमः मनसा ॐआत्मतत्त्वायस्वाहा १००

वा १० सशब्दं ॐआत्मतत्त्वायस्वाहा १०० वा १० एवं मनसा, सशब्दं च ॐविद्यातत्त्वाय–ॐशिवतत्त्वायस्वाहा १०० ॥ अथ षड्विंशतत्त्वहोमः प्रत्येकं दशांशतः ॥ ॐपृथ्वीतत्त्वायस्वाहा[1] । जल[2]-तेजस्[3]-वायु[4]-आकाश[5]-गन्ध[6]-रस[7]-रूप[8]-शब्द[9]-स्पर्श[10]-उपस्थ[11]–पायु[12] पाद[13]-पाणि[14]-वाक्[15]-घ्राण[16]- जिह्वा[17]-चक्षुस्[18]-त्वक्[19]-श्रोत्र[20]-मनस्[21]-अहङ्कार[22]–बुद्धि[23]–प्रकृति[24]–पुरुष[25]-काल[26] नियति[27]-राग[28] विद्या[29]-कला[30]-माया[31]-शुद्धविद्या[32]-ईश्वर[33]–सदाशिव[34]-शक्ति[35]-ॐशिवतत्त्वायस्वाहा[36] ॥ पूर्णा ॥ ॐहूं अमुकाणोरेतत्प्रारब्धशरीरकर्मवर्जं वर्तमानकर्म-भविष्यत्कर्म-शोधयामिस्वाहा १ द्वितीया । ॐहूं अमुकात्मनेहूं फट् स्वाहा वौषट् २ ॥ आज्ञा । "शुद्धाध्वानं मृतं शिशुं मुमुक्षुं परमे-पदे। निरपेक्षं योजयामि ममाज्ञां दीयतां शिव" इति गृहीताज्ञो मृतशिशुं मनसा मन्त्रात्मानं विभाव्य पूर्णाहुतिं सम्पूर्य शिष्यात्मानं संगृह्य स्वात्मनि संस्तभ्य स्रुगग्रे न्यस्य "तेजोऽसि" द्वारेशा (२५६-९) ॐहूंअमुकाणुं महाशून्ये परमशिवे योजयामि

स्वाहा वौषट् ॥ ततः कौलिन्या आहुतिशतं शतं दद्यात् ॥ ॐह्रीं श्रींक्रींफेंअं(आं) देविसुभगे अमुकस्य धरातत्त्वशोधिनि ओंह्रींश्रींक्रींफेंकौलिनिस्वाहा १०० । ॐह्रींश्रींक्रींफेंइं(स्त्रीईं) देवि ईश्वरि अमुकस्यासत्त्वशोधिनि ॐह्रींश्रींक्रींफेंकौलिनि स्वाहा१००। ॐह्रींश्रींक्रींफेंउं(ऊं)देविऊर्ध्वकेशिनि अमुकस्य तेजस्तत्त्वशोधिनि ॐह्रींश्रींक्रींफेंकौलिनिस्वाहा१००।ॐह्रीं श्रींक्रींफेंऋं(ॠं)देविविकरालिके अमुकस्य वायुतत्त्वशोधिनि ॐह्रींश्रींक्रींफेंकौलिनिस्वाहा१००॥ ॐह्रींश्रींफेंलृं(ॡं)देविसौम्ये अमुकस्यआकाशतत्त्वशोधिनि ॐह्रींश्रींक्रींफेंकौलिनिस्वाहा१००। पूर्णा। ॐ अमुकाणुःपूर्वपूजितमन्त्रशुद्धोस्तु-स्वाहा।तर्पणं॥अनेनमन्त्रहोमेनआत्मनो-पितुर्भैरवगो०पराची कर्मनिमित्ते शिवपदवीप्राप्तये हिरण्यादिकलाः सर्वादेवताः प्रीताः सन्तु ॥ अथ चित्तावास्तुं शालिचूर्णेनोल्लिख्य, पूजा यथा ॥

सव्येन ॥ संवः सू-अश्विनोः-। ॐगायत्र्यैनमः ३ ॐत-त्सदेशायवि ३ अद्यतावत, देशानेगागतयतसेशानस्य,

आग्नेये अग्नियुतस्यरुद्रस्य, नैर्ऋतेजलयुतस्यविष्णोः, वायवे वायुयुतस्येश्वरस्य, मध्ये पृथ्वीयुतस्य ब्रह्मणः, पूर्वे इन्द्रस्य, दक्षिणेयमस्य, पश्चिमे अपांपतेः, उत्तरे सोमस्य, चरक्याः विदार्याः पूतनायाः पापराक्षस्याः, स्कन्दस्य अर्यम्णः जम्बकस्य पिलिपिञ्छस्य । ( शैवे ) ईशाने, गगनयुतस्य अघोरस्य, आ, अग्नियुतस्य बहुरूपस्य, नै, निर्ऋतियुतस्य त्र्यम्बकस्य, वा, वायुयुतस्य रुद्रस्य, म, क्षितियुतस्य शिवस्य, पू, कपालेशस्य, द, शिखिवाहनस्य, प, क्रोधराजस्य, उ, विकरालस्य, ई, रजोत्कटस्य, आ, चण्डनेत्रस्य, नै, रौद्रवक्त्रस्य, वा, चण्डोग्रस्य, पूर्वे, महाचण्डस्य, द, सितवक्त्रस्य, प, सिंहनादस्य उ, उग्रसेनस्य चित्तावास्तुदेवतानां आत्मनो पितुर्भैरवगोत्रस्य रुद्रस्य अन्त्यकर्म निमित्तं चित्तावास्तुपूजनमर्चामहंकरिष्ये एवमेवासनम् ॥ ई, गगनयुतायेशानाय, आ, अग्नियुतायरुद्राय, नै, जलयुताय विष्णवे, वा, वायुयुतायेश्वराय, मध्ये, पृथ्वीयुताय ब्रह्मणे । पू,

इन्द्राय "दक्षिणे" यमाय, पश्चिमे, अपांपतये, उ, सोमाय, "ईशाने" चरक्यै, आ, विदार्यै, "नैर्ऋते" पूतनायै, वा, पापराक्षस्यै, पू, स्कन्दाय द, अर्यम्णे, प, जम्बकाय, उ, पिलिपिञ्छाय ।शैवे। "ईशाने" गगनयुताय अघोराय, आ, अग्नियुताय बहुरूपाय, "नैर्ऋते" निर्ऋतियुताय त्र्यम्बकाय, "वायवे" वायुयुतायरुद्राय, मध्ये, क्षितियुताय शिवाय । "पूर्वे" कपालेशाय, "दक्षिणे" शिखिवाहनाय, प, क्रोधराजाय, उ, विकरालाय, "ईशाने" रजोत्कटाय, आ, चण्डनेत्राय, नै, रौद्रवक्त्राय, "वायवे" चण्डोग्राय, "पूर्वे" महाचण्डाय, द, सितवक्त्राय, प, सिंहनादाय, उ, ग्रसनाय चित्तावास्तुदेवताभ्यः युष्मान्वः पूजयामि । ॐपूजय, गगनयुतमीशानं, अग्नियुतं रुद्रं, जलयुतं विष्णुं, वायुयुतमीश्वरं, पृथ्वीयुतं ब्रह्माणं, रुद्रं यमं अपांपतिं, सोमं, चरकीं, विदारीं, पूतनां, पापराक्षसीं, स्कन्दं, अर्यमणं, जम्बकं पिलिपिच्छं ॥ गगनयुतमघोरं, अग्नियुतं बहुरूपं, निर्ऋति-

युतं त्र्यम्बकं, वायुयुतं रुद्रं, क्षितियुतं शिवं, कपालेशं, शिखिवाहनं, क्रोधराजं, विकरालं, रजोत्कटं, चण्डनेत्रं रौद्रवक्रं, चण्डोग्रं, महाचण्डं, सितवक्रं, सिंहनादं, ग्रसनं चितावास्तुदेवता आवाहयिष्यामि ॥ यवान्विकीर्य । शन्नोदेवी । फट्अस्त्रमन्त्रेण "फट्अस्त्रायफट्" । लाजाश्च । ई, गगनयुतायेश्वराय पाद्यंनमः । शेषं निवार्य । पुनः शन्नोदेवी । फट्अस्त्रायफट् । आपःक्षीरं । भगवन्तोऽर्घ्यं २ ई, गगनयुतेशान, अग्नियुतरुद्र, जलयुतविष्णो, वायुयुतेश्वर, पृथिवीयुतब्रह्मन्, इन्द्र, यम, अपांपते, सोम । चरकि, विदारि, पूतने, पापराक्षसि, स्कन्द, अर्यमन्, त्र्यम्बक, पिलिपिच्छि । गगनयुताघोर, अग्नियुतबहुरूप, निर्ऋतियुतत्र्यम्बक, वायुयुतरुद्र, क्षितियुतशिव । कपालेश, शिखिवाहन, क्रोधराज, विकराल, रजोत्कट, चण्डनेत्र, रौद्रवक्र, चण्डोग्र, महाचण्ड, सितवक्र, सिंहनाद, ग्रसन, चित्तावास्तुदेवता, इदंवोऽर्घ्यंनमः ॥ गन्धादि दक्षिणान्तं ॥ अपसव्येनाऽक्षयम् ॥ अद्यतावत्-

पितुर्भैर-पराचीकर्मनिमित्तं शिवसायुज्यार्थं चित्तावास्तु-देवताप्रीत्याचितावास्तुदेवताः प्रीयन्तां ॥ सव्येन एता-देवता–। पृथक् २ नैवेद्यम् । आदौ वैदिके । अपसव्येन । अमृतमस्तु-यमाय अग्निष्वात्तादिभ्यः अद्यतावत् दक्षिणा-ग्नये नमोनैवेद्यम् ॥ सव्येन मुण्डयागे । अमृतमस्तु अस्त्राय शक्त्यै शिवकलशदेवताभ्यः, संहारभै-भीषण-कपालेश-उन्मत्त-क्रोधराज चण्ड-रुरु-असिताङ्गभैरवाय । महा-लक्ष्म्यै चामुण्डायै वाराह्यै ऐन्द्र्यै वैष्णव्यै कौमार्यै माहे-श्वर्यै ब्राह्म्यै मायादेव्यैनमोनैवेद्यम् ॥ "मायाजालस्य मध्ये आदौ" । मायादेवीसहिताय बहुरूपभैरवाय पूर्वे अमर्दकाय-कङ्कालाय भीमरवाय अट्टहासाय करवीराय कलङ्काख्याय कालग्रासाय कुलेश्वराय ॐनमोनैवेद्यं । ततश्चित्तावास्तोः चरिक्यादीनां विना । "अपसव्येन" । गगनयुतायेशानाय अग्नि-रुद्राय जलयु-विष्णवे वायुयु-ईश्वराय पृथ्वीयु-ब्रह्मणे । इन्द्राय यमाय अपांपतये सोमाय । शैवे ।

गगनयु-अघोराय, अग्नियु-बहुरूपाय, नैर्ऋतियु-त्र्यम्बकाय, वायुयु-ईश्वराय, क्षितियु-शिवाय । कपालेशाय शिखिवाहनाय क्रोधराजाय विकरालाय रजोत्कटाय चण्डनेत्राय रौद्रवक्त्राय चण्डोग्राय महाचण्डाय सितवक्त्राय सिंहनादाय ग्रसनाय चित्तावास्तुदेवताभ्योनैवेद्यं। वैदिके । इळामग्ने०। पूर्णान्तं। "सव्येन"। शिवाग्नौ स्रुवेनाज्यहोमः। मध्ये ॐब्रह्मणेस्वाहा१०८वा १०वा३ ॥ नैर्ऋते ॐविष्णवेस्वाहा१० "आग्नेये" ॐरुद्राय-१० "वायवे" ॐईश्वराय१० "ईशाने" ॐसदाशिवाय। ॐमहाभूतेभ्यः स्वाहा १० ॥ इन्द्राय, यमाय, वरुणाय ॐसोमायस्वाहा १० ततो मुण्डयागदेवताश्च होमयेत् ॥ ॐसंहारभैरवायस्वाहा १० भीषण-कपालेश-उन्मत्त-क्रोधराज-चण्ड-रुरु-असिताङ्गभैरवायस्वाहा १० ॐमहालक्ष्म्यै स्वाहा१० चामुण्डायै वाराह्यै ऐन्द्र्यै-वैष्णव्यै-कौमार्यै-माहेश्वर्यै ॐब्राह्म्यैस्वाहा १०ॐमायादेवीसहिताय बहुरूपभैरवायस्वाहा १० ॐगगनयु-अघोराय, अग्नियु-बहुरूपाय, नैर्ऋ-

तियु-त्र्यम्बकाय, वायुयु-ईश्वराय, क्षितियु-शिवाय, ॐक-पालेशाय, शिखिवाहनाय, क्रोधराजाय, विकरालाय, रजोत्कटाय, चण्डनेत्राय, रौद्रवक्त्राय, चण्डोग्राय, महा-चण्डाय, सितवक्त्राय, सिंहनादाय, ॐग्रसनायस्वाहा १० ॥ ततः पुर्यष्टकं ब्रह्मादिष्वऽर्पयेत् ॥ ॐहांब्रह्मणे अमुकसत्कौ शब्दस्पर्शावऽर्पयामिस्वाहा १०० वा १० ॐहांविष्णवे अमुकसत्कं रसमर्प,- ॐहांरुद्राय अमुकसत्के गन्धरूपे अर्प-। ॐहांईश्वराय अमुकसत्के बुद्ध्यहङ्कृती अर्पयामिस्वाहा । ॐहांसदाशिवाय अमुकसत्कं मनोऽर्पयामिस्वाहा १० ॥ ॐहांहसरक्षमलवयऊंहांब्रह्मन् अमुकस्य पुर्यष्टकांशं गृ-हाणस्वाहा ३ ॐहांएँहांविष्णो अमुकस्य० । ॐहां एँ हांईश्वर अमु-। ॐहांएँहांसदाशिव अमुकस्यपुर्यष्टकां-शंगृहाणस्वाहा १०८ वा १० पूर्णा एँ बहुरूपभैरवाय वौषट्स्वाहा । पुनः स्रुवेण । एँ अमुकस्यात्मनः कार्मपाशं-दहामि एँ फट्स्वाहाफट् १० । एँ अमुकस्यात्मनः मायी-

यपाशं-। ऍं अमुकस्यात्मनः आणवपाशं दहामि ऍंफट्स्वाहा फट् १० ॥ ऍं अमुकस्यात्मनः प्रायश्चित्तं शोधयामि ऍं फट्स्वाहाफट् १० पूर्णा ऍंअमुकस्यात्मनः प्रायश्चित्तशुद्धिरस्तुस्वाहा। "ततःक्षेत्रेशान् होमयेत्"। ॐआमर्दकायस्वाहा ॐकङ्कालाय-ॐभीमरवाय ॐअट्टहासाय-करवीराय कलङ्काख्याय-कालग्रासाय-ॐकुलेश्वरायस्वाहा १० चरक्यै विदार्यै पूतनायै पापराक्षस्यै स्कन्दाय अर्यम्णे जम्बकाय पिलिपिच्छायस्वाहा १० "धारणा" ॥ प्रणवोच्चारपूर्वं स्वदक्षनासापुटेन निर्गत्य शवस्य वामनासापुटे नाड्या हृदयं प्रविश्य प्राग् न्यस्तं चैतन्यमऽस्त्रेण छित्त्वाऽक्रम्य तद्दक्षनासापुटेन निर्गत्य स्ववामेन स्वहृदि प्रविश्य चित्तप्राणात्म सर्वमन्त्रसंयुक्तं कारणपदबोधनक्रमेण ॥ ऍं अमुकात्मानं परमशिवपदे योजयामि स्वाहावौषट्" इत्यूहेन योजनिकां कृत्वा "पूर्णा" मध्यप्राणनिविष्ट हंस ( २५६-९ ) ऍं समस्तन्यूनातिरिक्तविधिपूरणमस्तुस्वाहावौषट्। अथाग्नेः पुष्पं क्षिपेत् (दत्त्वा पूर्णाहुतिं ब्रू-

यादीक्षितेषु विशेषतः । त्वदिच्छया महेशान योऽनेन व्युत्क्रमः कृतः ॥ सोऽस्तु त्वदिच्छया पूर्णो मैनं रौत्सीः जगत्पते । देवदेव महेशान गुरुरामुत्रिके त्वया । प्रवर्तितोऽहं महतीं तद्देह्यस्मै सुवासनाम् ॥ दग्धबीजो यथा क्वापि न भूयो रोहयेदय मिति ) ॥ "मण्डलानलस्थदेवेनदत्तामाज्ञां विभावयेत् ॥" ततः कुण्डादऽग्निं गृहीत्वाऽवशिष्टं कुण्डाग्निं विमुञ्चेत् ॥ फट्अग्निं विमुञ्चामि ३ नयामि ॥ गृहीतमग्निं चितासमीपं नयेत् ॥ (पठेयुर्दीक्षिताः सर्वे विद्यां व्योमेश्वरीं ततः । सप्तकृत्वा समं चोच्चैर्वर्णानां च शतत्रयम् । पाठादस्या गुरुः सर्वपापोत्तीर्णो विमुच्यते । कर्णान्ते पठिता यातु पशूनामपि मोक्षदा ॥ न वाच्या कामतो या तु गृहे श्माशानिका यतः । यस्या उच्चारमात्रेण कम्पतेऽसौ स्वयं शिवः) ॥ दक्षिणकर्णे व्योमेश्वरीं पठेत् यथा ॥ "हंसः शुचिषद्लंवः व्योमेश्वरिवौषट्संरः महाकालसङ्कर्षणिवौषट्यंऊंवाय्वावारेफट् अंआंईऊंयांरांलांवांसांक्षांसर्वाधारवेदिनिनमःऊंयं

रःसंवःलंसः हंपादगुल्फजङ्घाजानुनीपायुब्रह्मकारणेश्वरिस्पृशहंसिनिस्वाहा, विश्ववह्निकुण्डलिनीविष्णुकारणेश्वरिस्पृशहंसिनिस्वाहा, हृदाकाशज्योतीरूपसरोरुहकिञ्जल्कलुम्पटेरुद्रकारणेश्वरिस्पृशहंसिनिस्वाहा, त्यक्तवाहद्वादशान्तसंहृतसोमसूर्यकलाग्रासैकघस्मरेईश्वरकारणेश्वरिस्पृशहंसिनिस्वाहा, वेदिताष्टकपाललालाटिकनिःशब्दनादध्वनिध्वन्यमानपराकाशरोहणलुम्पटे सदाशिवकारणेश्वरिस्पृशहंसिनिस्वाहा, समस्तग्रस्तपञ्चव्योमार्णवातीतनिरुद्धब्रह्मकवाटसमविषमव्यक्तवह्निपरज्योतीरूपेश्वरित्यक्ताधाराधेयनिःशेषनिःसङ्कल्पभावोज्झितदेहातीतनिःस्पृशस्पृशतनुंहंसिनिहंसःशुचिषत्स्वधा" ॥ तत आकाशगामिनीबलिः । "अन्नं मांसं पयो मत्स्या दध्याज्यं कृसरं मधु । इत्यष्टाङ्गं बलिं प्राहुः द्रव्यादेभ्यश्चितार्चने" ॥ नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा । येस्मिञ्श्मशानदेवाः स्युर्भगवन्तः सनातनाः ॥ तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गसंयुतम् ।

प्रेतस्यापि शुभाँल्लोकान्प्रयच्छन्त्वपि शाश्वतान् ॥ अस्मा-कमायुरारोग्यं सुखं च ददतांवरम् ॥

"ऊर्ध्वे ब्रह्माण्डतोऽमूर्दिवि गगनतले भूतले निष्कले वा पाताले कानने वा सलिलपवनयोः यत्रतत्रस्थिता वा। क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेषु प्रीता देव्यः सदा नः शुभफलविधिना पान्तु देवेन्द्रवन्द्याः ॥ अपसव्येन । योविश्वभाविनो० । चरक्यादीन्क्षेत्रेशानष्टाङ्गान्नेन "योस्मिन्निति" "तर्पयेत् ॥ ई, चरक्यै आ, विदार्यै, "नैर्ऋते" पूतनायै, वा, पापराक्षस्यै, "पूर्वे" स्कन्दाय, द, अर्यम्णे, "पश्चिमे" जम्भकाय, उ, पिलिपिच्छाय अष्टाङ्गमन्नं समर्पयामिनमः ॥ तत उत्तानं शवं दक्षिणशिरस्कोत्तानशवां चितां-समिधैरापूर्य । सव्येन "भैरवाग्नौ" फट्परिसमूह्य पर्युक्ष्य परि-षिच्य ९ दक्षिणपश्चिमाग्रैः स्तरैः परिस्तीर्य । १६ । तस्मिन्ने-वाग्नौ शङ्करं साङ्गं । ॐ बहुरूपभैरवायनमः" "हांह-हींशि-हूंशिखा-हैंकव-हौंनेत्राभ्यांहः अस्त्रा-" । इति च गन्धाद्यर्घ्यादि-

भिःसंपूज्य "हसरक्षमलवयऊं बहुरूपभैरवायस्वाहा" १०८ "ह्रींमायादेव्यैस्वाहा" १०८ हुत्वा, उल्मुकत्रयं दद्यात्। ईशाने, आकूत्यैत्वाइच्छाशक्तयेस्वाहा, "वायवे" कामायत्वाक्रियाशक्तयेस्वाहा[२]। "नैर्ऋते" समृद्ध्यैत्वाज्ञानशक्तयेस्वाहा[३] इति दत्त्वा पूर्णां ॥ स्रुक्स्रुवौ मध्यबिलौ वा, मध्याऽक्षोटावन्योन्यं मिलाप्य, "ॐत्वमग्ने दक्षिणः कालः कालेनैवोपपादितः। गृहाण मन्त्रसंपूतां शैवीमेतां ममाहुतिंस्वाहावौषट्" इति पठित्वा स्रुक्स्रुवावपि तत्रैवक्षिपेन्नासिकायां, ज्ञानखड्गंशिरसि, आज्यपात्रमुदरे, शेषमन्तराले क्षिपेत् ॥ अपसव्येन ॥ आज्यपात्रं सदधिघृतं दक्षहस्ते, आस्ये चरुशेषं स्रुवं नासिकायां, उपयामं शिरसि, शिष्टानि पात्राणि ऊर्वन्तराले क्षिपेत्। साग्निकानां स्त्रीणां चैकत्र श्राकृताग्निमग्निकोणे त्रक्षिप्य। "तेजोसि"। आश्रावितमिति असत्त्वमभिजातोसि त्वदयं जायते पुनः। असौ (देवदत्तः) स्वार्गायलोकायस्वाहा ॥ ततो रोमदाहे सम्पन्ने सव्यावृत्त्या त्रिः प्रदक्षिणं कृत्वा "अस्त्रानी-

लकपर्दिने सहस्राक्षेण वाजिनः । शर्वेणाध्वगघातिना तेन मा समरामसि" "इति पठन् त्रिः प्रक्रम्योदकधाराः क्षिपन् शिरस्तलस्थिते परशौ वाटिकामुच्चैःप्रेतनामोच्चारयुतां त्रोटयेत् ॥ सव्येन" । "ईशाने" शैवीमस्त्रवार्धानीं पूजयेत् । ॐअघोरास्त्रायफट्नमः, चोदनास्त्रायफट्, ॐखड्गायफट्नमः घण्टाय त्रिशूलाय खेटकाय वज्राय दण्डाय पाशाय परशवे मुद्गराय, अङ्कुशाय शराय पिनाकाय वराय अभयाय मुण्डाय खट्वाङ्गाय वीणायै डमरवेफट्नमः । वज्राय फट्नमः शक्तये दण्डाय खड्गाय पाशाय ध्वजाय गदायै त्रिशूलाय पद्माय ॐहलायफट्नमः । ततो "वामाचारं त्रिः प्रक्रम्य "ॐह्रींहूंहूंप्रस्फुर २ स्फुर २ घोरघोरतरउग्ररूप चटचट प्रचटप्रचट कह २ वम २ घातय २ हूंहूंहःहः फट्फट्फट् अघोरास्त्रायनमः" । इति पठन् उच्चैर्नामोच्चारयुतामस्त्रवार्धानीमीशानस्थपरशौ त्रोटयेत् ॥ अपसव्येन । उपस्थानम् । "नमोमहिम्ने उत चक्षुषे महतां पितरउरु

तद्वृणीमः । हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठाः शरीरैः" ॥ "सव्येन" धारणा "ॐहूंशान्तबोधप्रकाशात्मने ॐहांॐहींॐहूंॐहैंॐहौंॐहः ॐसः ब्रह्मात्मने ब्रह्ममूर्तये सर्वसमयलोपान्निवारय २ सर्वसमयं पूरय २ सान्निध्यं कुरुकुरुहूं फट्स्वाहा" इति प्रकाशरूपं देवं हृदि विधाय चितावास्तोर्विसर्जयेत् ॥ "अपसव्येन ॥" गायत्र्यैनमः ॐभूर्भुवः ३ तन्महेशायवि ३ अद्यतावत् ईशाने गगनयुतस्येशानस्य (२७९–९) चितावास्तुपूजनमच्छिद्रं सम्पूर्णमस्तु ॥ अर्धदाहे "अघोरास्त्रं" जपन्नदीतीरे अद्यतावत् पितः अन्त्यकर्मनिमित्तंएतत्ते तिलोदकमेतत्ते उदकतर्पणम् ॥ सव्येन । "ॐहांअमुकशुद्धात्मन् ईश्वरसमोभव, ॐहांअ० सदाशिवसमोभव, । ॐहांअमुकशुद्धात्मन् शिवसमोभव" ॥ (स्त्रीषु) "ॐहां–बलविकरणीसमाभव ।–बलप्रमथिनीसमाभव ।–मनोन्मनीसमाभव" इतिजलाञ्जलित्रयं दद्यात् ॥ तदनु ईशानकोणस्थो जपं कुर्यात् यथा 'ऎँबहुरूपायनमः १०८

ॐह्रींमायादेव्यैवौषट्नमः १०८ वक्त्राणांद्विगुणोजपः। यथा। ॐवांवामदेववक्त्रायनमः। ॐलंसद्योजातव–। ॐरंअघोरव-। ॐयंतत्पुरुषव-। ॐक्षंईशानवक्त्रायनमः॥ ततः स्वेष्टदेवस्यजपः ॥ ततः श्मशानभैरवस्य "ध्यानं" नीलाञ्जनचयप्रख्यं स्फुटिताधरभास्वरम्। ब्रह्मेन्द्रविष्णुनमितं नौमिश्मशानभैरवम् ॥ ॐह्रींफ्रांक्रौं श्मांश्मशानभैरवायनमः ॥ ॐह्रींश्रींफ्रांश्रांमहामायायैनमः १०८। ततः क्षमापणम् ॥ क्षमस्व देवदेवेश महाभैरवपूजित। गृहाणेमां बलिं पूजां गच्छ स्थानं स्वकं प्रभो ॥ अन्त्यजानां किञ्चिद्दत्त्वा वामाङ्गुष्ठप्रमाणेनाङ्गुष्ठमात्रमस्थिपुरुषमानीय तीर्थे सचैलस्नात्वा प्रज्वालितमग्निं सबान्धवस्त्रिः प्रक्रमन् "इन्द्रः सुनीत्या सहसा पुनातु सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु जातवेदा ऊर्जयन्त्या पुनातु" इति पठेत् ॥ ततोऽह्निकक्रियामाचरेत् ॥

इतिशिवनिर्वाणपद्धतिः ॥

## अथ दशाह्निकप्रेतक्रियाकाण्डविधिः

अपसव्येन ॥ अपन अष्टावित्यऽस्य, कौत्सऋषिः, गायत्रंच्छन्दः, अग्निर्देवता, शुचये विनियोगः ॥ अपनः शोशुचदऽघमऽग्ने शुशुग्ध्या रयिम् । अपनः शोशुचदऽघम् ॥ सुक्षेत्रिया सुगातुया, वसूयाच यजामहे । अपनः शोशुचदघम् ॥ प्रयद्भंदिष्ट एषां प्रास्माकासश्च सूरयः । अपनः शोशुचदघम् ॥ प्रयत्ते अग्ने सूरयो जायेमहिप्रतेवयम् । अपनः शोशुचदघम् ॥ प्रयदग्नेः सहस्वतो विश्वतो यन्ति भानवः । अपनः शोशुचदऽघम् ॥ त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अपनः शोशुचदघम् ॥ द्विषो नो विश्वतोमुखातिनावेव पारयः । अपनः शोशुचदऽघम् ॥ सनः सिन्धुमिव नाव याति पार्षास्वस्तये । अपनः शोशुचदघर्म् ॥ अद्यतावत्० पितः अमुकअमुकगोत्र प्रथमेऽहनि द्वितीयेऽहनि, तृतीयेऽहनि, चतुर्थेऽ, पञ्चमेऽ, षष्ठेऽ, सप्तमेऽ, अष्टमेऽ, नवमेऽ, दशमेऽहनि, एतत्ते तिलोदकम् ॥ सव्येन ॥ तीर्थे-

स्नेयं० । वसोः पवित्र० । आशीर्वादं । परमात्मने । स्वप्रकाशो । वनस्पति । नमोधर्म । गङ्गाभगवत्यै गन्धादि ॥ अपसव्येन । अद्यतावत् पितः प्रथमेऽहनि वा दशमेऽहनि एष ते धूपः एष ते दीपः ॥ दक्षिणाभिमुखः शिलापृष्ठे दारुपृष्ठे वा मृत्तिकोपलिप्ते दक्षिणाग्रान्दर्भानाऽस्तीर्य ॥ पितः अमुक प्रथमे वा दशमेऽहनि एतत्तेऽवनेजनम् ॥ प्रेतचरोरन्नमुद्धृत्य । तिलास्तोयं वामजानुं भूमौ निधाय ॥ अद्य-तावत् पितः प्रथमेऽहनि एष ते पिण्डः अपउपस्पृश्य ॥ एतत्ते ऊर्णवासः, एतत्तेवीरान्नं । पिण्डलेपं निवारयेत् ॥ पितः प्रथमेऽहनि एष ते गन्धः, पितः एषतेऽर्घः, एतत्ते पुष्पं, एष ते धूपः, एष ते दीपः, एष ते भक्ष्यभोज्य-फलमूलबलिः । पितः एतत्ते तिलमधुमिश्रमुदकपात्रं आचमनीयम् । पितः एतत्ते हिमपानं, एतत्तेक्षीर-पानं, एतत्ते मधुपानं, एतत्तेतिलोदकं, एतत्ते उदक-तर्पणं, हिमंहिमं रजतं रजतं ॥ तद्विष्णोरितिपुष्पद्वयं ॥

एकदर्भविष्टरं वामांगुष्ठे निधाय, पात्रान्तरे पिण्डं संस्थाप्य ॥ अद्यतावत् पितुः प्रथमे वा दशमेऽहनि सुशुद्धप्रकृतिसाधनाय गङ्गाप्रवाहेऽयं पिण्डोऽस्तु पूरकः ॥ पितः प्रथमेऽहनि प्रथमस्तिलोदकुम्भः । पितः प्रथमेऽहनि प्रथमस्तिलोदकाञ्जलिः । एवं प्रेतनाम्नादिनवृद्ध्या तिलोदकुंभतिलोदकाञ्जलयो द्वितीये द्विः २ तृतीये त्रिः ३ दशमे दश १० देयाः ॥ "यथा" द्वितीयदिवसे । पितः द्वितीयेऽहनि प्रथमस्तिलोदकुम्भः वा प्रथमस्तिलोदकाञ्जलिः । पितः द्वितीयेऽहनि द्वितीयस्तिलोदकुम्भः वा द्वितीयस्तिलोदकाञ्जलिः ॥ सविष्टरोदकप्रेतकुम्भमुपरि । "श्मशानानलदग्धोऽसि परित्यक्तोऽसि बान्धवैः । इदं क्षीरमिदं नीरं" प्रथमेऽहनि प्रेत अत्र स्नाहि, अपः पिब । द्वितीयपात्रमुपरि ॥ यमदूत ! अत्र स्नाहि, अपः पिब । प्रेत क्षीरं पिब । यमदूत क्षीरं पिब । प्रेत मधुलीढि, यमदू० । प्रेत तिलान्भुंक्ष्व, यमदू० । प्रेत अन्नमद्धि, यम० । प्रेत सर्पिष्भज, यम० । प्रेत गुडशर्कर-

फलमूलद्राक्षादि भुंक्ष्व, यमदू० ॥ तत्पृष्टे भाण्डमाऽदाय ॥ प्रेतयमदूतौ एष वां गन्धः, एषवामर्घः, एतद्वां पुष्पं, एष वां धूपः, एष वां दीपः । एतद्वां वासः, एतद्वां माल्यं, एतद्वां दण्डं ॥ अद्यतावत्० पितुः प्रथमेऽहनि वा दशमेऽहनि एष प्रेतकुम्भोऽहोरात्रतृप्तयेऽस्तु ॥ "सव्येन" ॥ प्रत्यग्रे हरसाहरेत्यारात्रिका ॥ "अपसव्येन" ॥ प्रेतकुम्भं वामकुक्षौ गृहीत्वा गृहं गच्छेत् । गृहद्वारदक्षिणशाखोपरि प्रेतकुम्भं संस्पृश्य, वामपादेनाऽश्मानं बहिः क्षिप्त्वा, दक्षिणपादेन लोहशस्त्रमऽन्तः प्रक्षिप्य, गृहं प्रविशेत् ॥ गृहमध्ये सोदकुम्भपूजा ॥ "सव्येन" ॥ तीर्थे स्नेयं । धूपदीपः । "अपसव्येन" पितः प्रथमेऽहनि सोदकुम्भे एष ते धूपः, एष ते दीपः ॥ जलकुम्भमध्ये विष्टरं क्षिप्त्वा । "कुम्भोऽवनिष्टो जनिता शचीभिर्यस्मिन्नऽग्रे योन्यां गर्भोऽन्तः । प्लाशिर्व्यक्तः शतधार उत्सो दुहेन कुम्भेन स्वधा पितृभ्यः" इति तिलोदकं क्षिपेत् ॥ पितः प्रथमे वा दशमेऽहनि सोदकुम्भे एष

ते गन्धः, एष तेऽर्घः, एतत्ते पुष्पं एष ते धूपः, एष ते दीपः एतत्तेवासः, एतत्ते माल्यं। तिलोदकक्षीरमध्वादि एकस्मिन्पात्रे संस्थाप्य। अद्यतावत् पितुः प्रथमेऽहनि "अयं सोदकुम्भ अहोरात्रतृप्तयेऽस्तु" इत्युक्त्वाऽन्तःक्षिपेत् ॥ "सव्येन" अग्नौ तिलैरक्षोघ्नमन्त्रं, ऐन्द्राग्नं तावद्धुनेत् ॥ अनेन मन्त्रहोमेन आ० रक्षोघ्नमन्त्राः प्रीयन्तां प्रीताः सन्तु ॥ दशमेऽहनि सोदकुम्भविसर्जनं पुष्पैः ॥ नमः पितृभ्यः प्रेतेभ्यो यमाय जातवेदसे। षट्त्रिंशत्तत्त्वमोक्षाय प्रेत गच्छ शिवालयम् ॥ मयि मदन्वये वापि देहि लाभं विशेषतः। आयुरारोग्यमैश्वर्यं देहि मे विमलां श्रियम् ॥ दशाह्निकं तु रात्रौ तु सोदकुम्भं विनिक्षिपेत् इति ॥ "अथ दशमेऽहनि पिण्डोपरि पुष्पैर्विसर्जनम्" ॥ शिरो मे श्रीर्यशोमुखं त्विषि केशाश्च श्मश्रूणि। राजा मे प्राणो अमृतं सम्राट्चक्षुर्विराट्श्रोत्रम् ॥ जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्भसः। मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥

बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्यं च। आत्मा क्षेत्रमुरो ममपृष्टिर्मे राष्ट्रमद्वसु ॥ अंसौ ग्रीवाश्च श्रोणी ऊरू अरत्नी जानुनी। विश्वो मेऽङ्गानि सर्वशः ॥ नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसः ॥ आनन्दनन्दौ अण्डौ मे भगः सौभाग्यं भसः। जङ्घाभ्यां पद्भ्यां धर्मेऽस्मिन्विश्वराजा प्रतिष्ठितः इति ॥ वपनमन्त्रः ॥ आत्मनः शुद्धिकामस्तु पितुर्वैकुण्ठहेतवे। वमनं कारयिष्यामि तीरेऽहं तव जाह्नवि ॥ यानि कानि च पापानि ब्रह्महत्यादिकानि च। केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यऽहम् ॥ वपनं कृत्वा जलान्तर्विष्टरयुतवामस्कन्देन प्रेतकुम्भं गृहीत्वा क्षेपणमन्त्रः ॥ "पुंविषये ॥" इदं पुरुषशार्दूल विमलं दिव्यमुत्तमम्। प्रेतलोकेषु पानीयं मद्दत्तमुपतिष्ठतु ॥ "स्त्रीविषये ॥" इदं स्वदिति कल्याणि विमलं दिव्यमुत्तमम्। प्रेतलोकेषु पानीयं मद्दत्तमुपतिष्ठतु ॥

इति वैदिकदशाहिकप्रेतक्रियाविधिः ॥

# "अथ शिवक्रियाविधिः"

अत्रादौ वैदिकक्रियां कृत्वा । ब्रह्मणस्याग्रे मृल्लिप्तशिलायां दर्भैकक्काण्डविष्टरयुतं कलशत्रयं शालिचूर्णलिखितपद्मेषु संस्थाप्य "दक्षिणेऽस्त्रकलशे" गः अस्त्रायफट् । रः अ-। हः अ-। य अस्त्रा-। लः अ-। फट् अस्त्राय फट् । ॐश्लींपशुहूंफट् ॥ ॐहृ-। श्लींशिर-। पशिखा-। शुकव-। हूं नेत्रा-। फट् अस्त्रा-॥ तेन सर्वद्रव्यप्रोक्षणम्" ॥ आधूम्र २ जीव जीव सः सः सर्वासां पुष्पजातीनां जीव आगच्छतुस्वाहा "इति पुष्पे ।" कालाग्निरुद्राय जगद्धूमसुगन्धिने सर्वगन्धवहाय नमः "इति धूपे ।" जगज्ज्योतीरूपायनमः "इतिदीपे ।" गन्धमादिनि गन्धं जीवापयतुस्वाहा "इति चन्दने ।" ह्रींस्वाहा"इति कुङ्कुमे ।" लंपृथिव्यै धरित्रशक्तयेनमः"इत्यर्घ्यें।" क्लींवरुणराजानकायनमः "इत्युदके ।" फट्सर्वोपचारशुद्धिरस्तु फट्स्वाहा "इति सर्वद्रव्येषु" स्वात्मासनायनमः "इति स्वासने ।" दिङ्मातृभ्योनमः "इत्याकाशे ॥ ॥

"मध्येऽर्घ्यकलशे द्वितीयपद्मस्थे ॥" ॥ आपः क्षीरं- । ॐस्वांस्वांसःसोमायवौषट् "इति जलं" । वागीश्वरि वाक्प्रदे सरस्वत्यैनमः "इतिक्षीरं[2]" । ज्रींसावित्रिपाप-भक्षिणिहूंफट्सावित्र्यैनमः "इति कुशाः[3]" । ॐहूंविष्णवे सुरपतये महाबलायनमः "इति पुष्पं[4]" । ॐतत्सदोंपितृ-भ्योनमः "इति तिलान्[5]" । ॐलांप्रवीर्यजगद्धात्रेनमः स्वाहा "इति तण्डुलान्[6]" । ब्रह्मणेज्येष्ठायनमः "इति यवान्[7]" । ॐ-त्रिजटोर्ध्वपिङ्गलाय रुद्रायनमः "इति सर्षपान्[8]" एवमष्टाङ्गेन पूरयेत् ॥ ॥ "वामे मन्त्रकलशे तृतीयपद्मस्थे" ॥ ग्लूंगंगण-पतयेनमः । गामित्यङ्गानि । ग्लूंसः गणपतिवल्लभायैनमः । गांगीं । क्लींकांकुमारायनमः । कांकीं । ह्रांह्रींसःसूर्याय नमः । ह्रांह्रां । श्रींश्रियैनमः । श्रांश्रीं । सांसींसरस्वत्यै-नमः । लंलक्ष्म्यैनमः । वंविश्वकर्मणेनमः । ॐह्रींदुं-दुर्गायैनमः । ॐहूंह्रींलक्ष्मीनारायणायनमः । ॐह्रींश्रीं-हूंफ्रांअंखांगारिकायैनमः । ॐ ह्रींश्रींनवग्रहविमर्दि-

शत्रून्भक्षयभक्षयहूंफट्स्वाहा । ॐह्रींश्रींरांक्लींसौः भगवत्यैराज्यैह्रींस्वाहा । ॐनमःशिवाय । ॐहृ-। नशिर-। मः शिखा-। शिकव-। वानेत्रा । "यअस्त्रा" इत्यस्त्रकलशे ॥ ॐनईशानवक्त्रायनमः । ॐमः तत्पुरुषव-। ॐशिअघोरव-। ॐवावामदेवव-। ॐयसद्योजातवक्त्रायनमः ॥ ॐह्रींअनन्तायनमः । सूक्ष्माय, शिवोत्तमाय, एकरुद्राय, एकनेत्राय, त्रिमूर्तये, श्रीकण्ठायनमः, शिखण्डिने, ॐरांरींनन्दिने, सांसींमहाकालायनमः ॐत्रांवृषभाय ॐहूसौंः भृङ्गीरुद्राय, ॐह्रींअम्बिकायै, चण्डेश्वराय गांगणेश्वराय क्लींकांकुमारायनमः लंइन्द्रायवज्रहस्तायनमः । रंअग्नये शक्ति-। यंयमायद-। क्षंनैर्ऋतयेख-। वंवरुणायपा-। वांवायवेध्वजह। कुंकुबेरायग-।ईईशानायत्रि-। आंब्रह्मणेपद्म। ह्रींविष्णवेचक्रहस्तायनमः । ह्रींश्रींआंब्राह्म्यैनमः, ईमाहेश्वर्यै, ऊंकौमार्यै, ॠंवैष्णव्यै, लृंवाराह्यै, ऐंनारसिंह्यै ऍऐन्द्र्यै, औंचामुण्डायै, अःमहालक्ष्म्यैनमः, जयायै,

विजयायै, सुभगायै, दुर्भगायै, जयन्त्यै, ऊहिन्यै, अपराजितायै, करालयैनमः आंअग्न्यादित्याभ्यां संवरुण चन्द्रमोभ्यां, हूंकुमारभौमाभ्यां हूंविष्णुबुधाभ्यां ह्रीं-इन्द्राबृहस्पतिभ्यां स्त्रींसरस्वतीशुक्रभ्यां कुंप्रजापतिशनैश्च-राभ्यां, कुंगणपतिराहुभ्यां, ह्रींरुद्रकेतुभ्यां, ब्रंब्रह्मध्रुवाभ्यां, आंअनन्तागस्त्याभ्यांनमः । अनन्तनागराजायनमः । वासुकिना-। पद्मना-। महापद्मना तक्षकना-। कार्कोट-कना-। शङ्खपालना-। कुलिकनागराजायनमः । ॐव-ज्रायफट्नमः, शक्तयेफट्नमः, दण्डाय-। खड्गाय-। पाशा-य-। ध्वजाय-। गदायै-। त्रिशूलाय-। पद्माय-। चक्रायफट्-नमः । ॐजुंसः अमृतेश्वरभैरवायनमः । ॐजुंह-। व्यों-शिर-। ईंशिखा-। हूंकव-। ज्योंनेत्रत्र-। फट्अस्त्रा-॥ ॐजुंसः अमृतलक्ष्म्यैनमः॥ जुंह-। व्योंशि-। ईंशिखा-। हूंकव-। ज्यों-नेत्र-। फट्अस्त्रा॥ सर्वमन्त्रचक्रतृप्तिरस्तुस्वाहावौषट् ॥ ॥ "शिलापूजा" ॥ ॥ "अग्रे" प्रभामण्डलायनमः, इष्टाय,

भृङ्गीशाय, अम्बिकायै, द्वारश्रियै, लक्ष्म्यै, गणपतये, सरस्वत्यै, त्रिशूलाय, विश्वकर्मणेनमः "पूर्वे" उमायै, दुर्गायै, भद्रकाल्यै, स्वस्तये, स्वाहायै, शुभङ्कर्यै, श्रियै, गौर्यै, भूतधात्र्यै, वागीश्वर्यैनमः "स्ववामे" नन्दिने, गङ्गायै, मेषास्यायै, चण्डाय, शङ्खनिधये दण्डिनेनमः । "स्वदक्षे" महाकालाय, यमनाय, छागलास्याय, उपचण्डाय, पद्मनिधये, महोदरायनमः । "ऊर्ध्वे" द्वारश्रिये "अधः" देहल्यैनमः । "मध्ये" ब्रह्मणे वास्तुपुरुषाय क्षेत्रपालाय, मणिभद्राय, सर्वेभ्योभूतेभ्योनमः शतदलपद्मासनायनमः सहस्रदलपद्मासनायमः गुरवेनमः परमगुरवेनमः परमेष्ठिनेगुरवेनमः परमाचार्यानमः आद्यसिद्धेभ्योनमः ॥ इति कलशस्थापनम् ॥ ॥ अनामिकास्थदर्भकाण्डद्वयोयजमानः ॥ ॥ "अपसव्येन" ॥ "पुंविषये" तिलोदकेन ॐजुंसःईश्वरसमोभवस्वधानमः । ॐजुंसः सदाशिवसमोभवस्वधानमः । ॐजुंसःशिवसमोभवस्वधानमः ॥ "स्त्रीविषये" ॐजुंसःब-

ऽविकरिणीसमाभवस्वधानमः। ॐजुंसःबलप्रमथिनीसमा-भवस्वधानमः । ॐजुंसःसर्वभूतदमनीसमाभवस्वधानमः ॐतत्सद्ब्रह्माद्यतावत्-पित्रे शिवगोत्रायरुद्राय "वा" मात्रे शिवगोत्रायै रुद्राण्यै प्रथमे "वा" दशमेऽहनि एष ते तिलोदकाञ्जलिःस्वधानमः ॥ "सव्येन" । "मन्त्रकलशजले-नात्मप्रोक्षणम्" ॥ नौमि स्वात्मप्रकाशं प्रशमितविषमक्लेश-राशिं महेशं वन्दे वाग्देवतां तां कलयति किल या मूलतो वाग्लतायाः। विघ्नग्रासप्रबन्धादिव बृहदुदरं नौमि विघ्ना-धिराजं दत्तप्राग्दीक्षमेकं गुरवरमपरं ज्ञानदं च प्रपद्ये॥ वन्दे महेशं विश्वेशं वन्दे वाग्देवतां पराम्। वन्दे लम्बो-दरं देवं वन्देऽहं गुरुपादुकाम्॥ ॐह्रींसःपवित्रकमर्पया-मिनमः ॥ स्वात्मनेशिवस्वरूपाय समालभनं गन्धोनमः अर्घोनमः पुष्पंनमः ॥ ॥ संसारमरुकान्तारमहामोहनिवृ-त्तये। तदिदमऽमृतं चक्षुर्दीपोऽयं शिव गृह्यताम् ॥ "इति दीपे" । कालाग्निरुद्ररूपं ते सर्वाधिविनिषूदनम् । सर्वेशै

भाग्यजननं धूपोऽयं शिव गृह्यताम् "इतिधूपे" ॥ द्विभुजं चैकवदनं सौम्यं पङ्कजभृत्करम्। तेजोबिम्बस्य मध्यस्थं वर्तुलं रक्तवाससम्॥ आदित्यमीदृशं ध्यायेद्भुक्तिमुक्तिफलप्रदम्। "इतिसूर्ये" ॥ स्वात्मने शिवस्वरूपाय दीपोनमः। अद्यतावत् नन्दिरुद्राय महाकालाय भवायदेवाय अस्त्रार्घ्यमन्त्रकलशदेवताभ्यः दीपोनमः। अपसव्येन। पित्रे शिव-। प्रथमे "वा" दशमेऽहनि दीपःस्वधानमः। "दक्षिणाग्रान्दर्भानास्तीर्य"। अस्त्रकलशजलेनाऽवनेजनम् ॥ पित्रे शिवगो० प्रथमेऽहनि अवनेजनं स्वधानमः। आधारशक्त्यैनमः पृथिव्यै क्षीरार्णवाय, चन्द्रमसे, वह्निमण्डलाय, सूर्यमण्डलाय, अनन्ताय, धर्माय, अधर्माय, सहस्रदलपद्मासनाय, अष्टदलपद्मास०, ॥ "चरुमानीय"। तिलास्तोयं। अन्नतिलमध्वाज्यपयोभिर्दक्षिणहस्ततले वामावर्तेन पिण्डं वर्तयेत् ॥ (अग्निष्वात्तेभ्यो विद्महे बर्हिषद्भ्योधीमहि, तन्नः सोमः प्रचोदयात् ३ अद्यतावत्=लंदिव्यं शिवस्वरूपिणं सर्व-

न्धविवर्जितम् । सर्वकर्मविनिर्मुक्तं, धर्माधर्मबहिष्कृतं पिण्डमुत्पादयामिस्वधानमः) धूम्राकलायै धूम्राकलाश्रयायै पृथ्वीतत्त्वाय, पृथ्वीतत्त्वस्वरूपाय, क्षंईशानवक्त्राय, क्षं ईशानवक्त्राश्रयाय, ॐजुंसः पितः शिवगोत्र रुद्र "वा" मातः शिवगोत्रे रुद्राणि प्रथमेऽहनि एष ते पार्थिवः पिण्डः स्वधानमः। अप उपस्पृश्य ॥ १ ॥ (अग्निष्वात्तेभ्यो–) नीलरक्ताकलायै नीलरक्ताकलाश्रयायै अप्तत्त्वाय अप्तत्त्वस्वरूपाय यंतत्पुरुषवक्त्राय यंतत्पुरुषवक्त्राश्रयाय ॐजुंसः पितः "वा" मातः द्वितीयेऽहनि एष ते आपः पिण्डः स्वधानमः अपउपस्पृश्य ॥२॥ (ॐअग्नि-) कपिलाकलायै कपिलाकलाश्रयायै तेजस्तत्त्वाय तेजस्तत्त्वस्वरूपाय रंअघोरवक्त्राय रंअघोरवक्त्राश्रयाय ॐजुंसः पितः "वा" मातः तृतीयेऽहनि एष ते तैजसः पिण्डः। अपउपस्पृश्य ॥ ३ ॥ (ॐअग्निष्वा-) विस्फुलिङ्गिनीकलायै विस्फुलिङ्गिनीकलाश्रयायै वायुतत्त्वाय वायुतत्त्वस्वरूपाय वंवामदे-

वक्त्राय वंवामदेववक्त्राश्रयाय ॐजुंसः पितः "वा" मातः चतुर्थेऽहनि एष ते वायवः पिण्डः ॥४॥ (अग्निष्वात्ते-) ज्वालाकलायै ज्वालाकलाश्रयायै आकाशतत्त्वाय आकाशतत्त्वस्वरूपाय लंसद्योजातवक्त्राय लंसद्योजातवक्त्राश्रयाय ॐजुंसः पितः "वा" मातः पञ्चमेऽहनि एष ते आकाशः पिण्डः ॥ ५ ॥ (अग्निष्वात्ते-) तेजोवतीकलायै तेजोवतीकलाश्रयायै मानसतत्त्वाय मानसतत्त्वस्वरूपाय सर्वज्ञताहृदयाय सर्वज्ञताहृदयाश्रयाय ॐजुंसः पितः "वा" मातः षष्ठेऽहनि एष ते मानसः पिण्डः ॥ ६ ॥ (ॐअग्नि-) हव्यवाहनाकलायै हव्यवाहनाकलाश्रयाय बुद्धितत्त्वाय बुद्धितत्त्वस्वरूपाय तृप्तिशिरसेस्वाहायै तृप्तिशिरसेस्वाहाश्रयायै ॐजुंसः पितः "वा" मातः सप्तमेऽहनि एष ते बौद्धः पिण्डः ॥७॥ (ॐअग्निष्वात्ते-) कव्यवाहनाकलायै कव्यवाहनाकलाश्रयायै अहङ्कारतत्त्वाय अहङ्कारतत्त्वस्वरूपाय अनादिबोधशिखायै अनादिबोधशिखाश्रयायै नमः ॐजुंसः

पितः "वा" मातः अष्टमेऽहनि एष ते आहङ्कारिकः पिण्डः ।।८।। (ॐअग्निष्वात्तेभ्यो-) रौद्रीकलायै रौद्रीकलाश्रयायै प्रकृतितत्त्वाय प्रकृतितत्त्वस्वरूपाय स्वतन्त्रकवचाय स्वतन्त्र-कवचाश्रयाय ॐजुंसः पितः "वा" मातः नवमेऽहनि एष ते प्राकृतः पिण्डः ।।९।। (ॐअग्निष्वात्तेभ्यो-) संहारिणी-कलायै संहारिणीकलाश्रयायै पुरुषतत्त्वाय पुरुषतत्त्वस्वरू-पाय अलुप्तशक्तिअस्त्राय, अलुप्तशक्तिअस्त्राश्रयाय ॐजुंसः पितः "वा" मातः शिवगोत्रे रुद्राणि दशमेऽहनि एष ते पौरुषः पिण्डः । अपउपस्पृश्य ।। १० ।। पितः एष ते ऊर्णवासः, वीरान्नं स्वधानमः । लेपं निवार्य ।। पित्रे शिव-गोत्राय-समालभनं गन्धःस्वधानमः, अर्घः, पुष्पं, दीपः, धूपः, भक्ष्यभोज्य, तिलमधु, हिमपानादि स्वधानमः । "मध्यार्घ्यकलशजलेनान्नसहितेन" । ऊर्जासि नमस्कारं करोमि स्वधानमः ।। ततः पुष्पपूजा [ (ॐअग्निष्वात्तेभ्यो) इसमत्र की तबदिलीसे (आं प्रभुशक्तये) यह मन्त्रपढके, भाकय

(धूम्रकलायै) इह आदिक पिण्डस्थापन मन्त्रों से फी पिण्ड को फूल चढाना ॥] "यथा" "(आं प्रभुशक्तयेनमः, ईंइच्छाशक्तयेनमः ऊंज्ञानशक्तये, लृंं क्रियाशक्तयेनमः)॥" "धूम्रकलायैनमः (पृ. ३०६।२)," इह भी पढकर पित्रे शिवगोत्राय रुद्राय प्रथमेऽहनि वासांसि स्वधानमः ॥ एवं ( आं प्रभुक्तये नमः ) संहारिणीकलायैनमः–( पृ.३०८।५ ) पित्रे-दशमेऽहनि वासांसि स्वधानमः ॥ ॥ सव्येन ॥ ॥ अर्घेन दीपं संकल्प्य (नमोस्तु ते महादेवि सर्वोपद्रवनाशिनि । इच्छारूपे स्वरूपस्थे नित्ये नित्यात्मिके शिवे । कलाकलङ्करहिते भावभावान्तमध्यगे । अव्यक्ते कलनातीते शान्ते नित्योदिते परे । लयोदयविनिर्मुक्ते नित्यतृप्ते निरामये । शक्तिबीजस्वभावस्थे चण्डीकापालिनीश्वरि । स्वाहाकारे स्वधाकारे परिपूर्णे कृपापरे । त्वं देवी सर्वभूतानां व्याप्तिकर्त्री न संशयः । त्वया व्याप्तमिदं सर्वं भूतसर्गं चराचरम् । खचक्रयोगिनीनां च पारम्पर्यानुमध्यगे । अद्यास्माकं

हितार्थाय सन्निधानं कुरु प्रभो ॥ ॥ अपसव्येन ॥ ॥ "तिलेन" यमान्तकायैविद्महे कालरात्र्यैधीमहि । तन्नश्चण्डी प्रचोदयात् ३ (अद्यतावत् पितुः शिवगोत्रस्य रुद्रस्य मोहान्धकारनिवृत्यर्थं परलोके प्रकाशवृद्ध्यर्थं ) प्रथमेऽहनि ब्राह्मीदीपं परिकल्पयामिनमः ॥ १ ॥ (सव्येन । पुनः अर्घेन । नमोस्तुते—वृद्ध्यर्थं ) द्वितीयेऽहनि माहेश्वरीदीपं— ॥ २ ॥ एवं ( नमोऽस्तुते- ) तृतीयेऽहनि कौमारीदीपं- ॥३ ॥ ॥ चतुर्थेऽहनि वैष्णवीदीपं-॥ ४ ॥ ॥ पञ्चमेऽहनि वाराहीदीपं- ॥ ५ ॥ ॥ षष्ठेऽहनि नारसिंहीदीपं- ॥६॥ ॥ सप्तमेऽहनि ऐन्द्रीदी- ॥७॥ ॥ अष्टमेऽहनि चामुण्डादीपं-॥ ८ ॥ ॥ नवमेऽहनि महालक्ष्मीदीपं- ॥९॥ ॥ ( सव्येन । नमोस्तुते । अपसव्येन । यमान्तकायै-अद्यतावत् पितुः-प्रकाशवृद्ध्यर्थं) दशमेऽहनि चण्डीदीपं परिकल्पयामिनमः ॥१०॥ "पिण्डेषु पुष्पं मन्त्रकलशात्" ॥ त्रयीसप्तचतुर्युग्ममयी त्रितयवर्त्मनि । स्थितो यः शक्तिसहितः

स जयत्यऽमरेश्वरः ॥१०॥ "वामाङ्गुष्ठे काण्डैकविष्टरं निधाय पिण्डं नद्यां क्षिपेत्"। (अद्यतावत्-पितुः शिवगोत्रस्य रुद्रस्य प्रथमेऽहनि निर्मलनिर्द्वन्द्वशिवप्रकृतिसाधनाय अमुकनद्याः प्रवाहे) अयं पार्थिवः पिण्डः पूरकोऽस्तु स्वधानमः ॥ पित्रे शिव-प्रथमेऽहनि-प्रथमस्तिलोदकुम्भः स्वधानमः। प्रथमे-हनि प्रथमस्तिलोदकाञ्जलिः ॥ १ ॥ एवं द्वितीये-आप्यः पिण्डः पूरकोऽस्तु स्वधानमः। पित्रे शिवगोत्राय द्वितीये-ऽहनि प्रथमस्तिलोदकुम्भः। पित्रे द्वितीयेऽहनि द्वितीय-स्तिलोदकुम्भः स्वधानमः। पित्रे द्वितीयेऽहनि प्रथमस्तिलो-दकाञ्जलिः स्वधानमः। पित्रे द्वितीयेऽहनि द्वितीयस्तिलो-दकाञ्जलिः स्वधानमः ॥२॥ तृतीयेऽतैजसः ॥३॥ चतुर्थे-ऽहनिवायवः ॥ ४ ॥ पञ्चमेआकाशीयः ॥ ५ ॥ षष्ठे मानसः ॥ ६ ॥ सप्तमे बौद्धः ॥७॥ अष्टमे आहङ्कारिकः ॥८॥ नवमे प्राकृतिकः ॥९॥ दशमेऽहनि पौरुषः पिण्डः पूरकोस्तु स्वधा-नमः ॥ एवं पितुः प्रथमे २,३,४,५,६,७,८,९, दशमेऽहनि

दशमस्तिलोदकुम्भः स्वधानमः ॥ प्रथमे प्रथमः २, ३, ४, ५, ६, ७, ८, ९, १० ऽहनि दशमस्तिलोदकाञ्जलिःस्वधानमः ॥ "पुनः" शताञ्जलिः "ॐ ह्रूंबहुरूपभैरवायनमः" (इस मन्त्र से सौ १०० जलाञ्जलि-देकर) ॥ अद्यतावत् पित्रे शताञ्जलिं ददामि स्वधानमः ॥ दशमेऽहनि कुम्भंक्षिपेत् ॥ मन्त्रकलशात् शिष्यस्य "मन्त्रार्थाः सफलाः" इति दत्त्वा । रिक्तान् कलशत्रयपात्रान् पुनर्जलार्घयुतान् स्वेस्वेस्थाने क्षेत्रपालान्प्रकल्प्य ॥ क्षांक्षेत्रपालायनमः ॥ आमर्दकायनमः कङ्कालाय, भीमरवाय, अट्टहासाय, करवीराय, करङ्काख्याय, कालग्रासाय, कुलेश्वरायनमः ८ । मयि पुष्टिं पुष्टिपतिर्दधातु ॥ इति सन्तर्प्य ॥ आरात्रिका ॥ गृह्णन्तु शिवसम्भक्ताः प्रेताः प्रासादबाह्यगाः । पञ्चभूताश्चये मन्त्रास्तेषामनुचराश्च ये । ते तृप्यन्तु स्वाहावौषट् ॥ ततो गृहं गत्वा रक्षामन्त्रं पठेत् ॥ "आमर्दकोऽथ कङ्कालो भीमरावोऽट्टहासकः । करवीरः करङ्काख्यः कालग्रासः कुलेश्वरः ॥ इति शिवक्रियाविधिः ॥

## अथ शिवश्राद्धेऽन्नपूरिपूजा ॥

ॐनौमि स्वात्मप्रकाशप्रशमितविषमक्लेशराशिं महेशं वन्दे वाग्देवतां तां कलयति किल या मूलतां वाग्लतायाः । विघ्नग्रासप्रबन्धादिव बृहदुदरं नौमि विघ्नाधिराजं दत्तप्राग्दीक्षमेकं गुरुवरमपरं ज्ञानदं च प्रपद्ये ॥ वन्दे महेशं विश्वेशं वन्दे वाग्देवतां पराम् । वन्दे लम्बोदरं देवं वन्देऽहं गुरुपादुकम् ॥ ॥ ॐह्रींसःपवित्रकमर्पयामिनमः ॥ ॥ भुक्त्वा भोगानवनिवलयं धर्मतः पालयित्वा जित्वा शत्रून् द्रविणनिवहैरर्थिनस्तर्पयित्वा । अम्लानश्रीर्वयसि चरमे पुत्रसंन्यस्तभारः स्वस्थे चित्ते त्रिभुवनगुरुं शम्भुमभ्यर्चयेथाः ॥ ॥ यं शैवाः समुपासते शिव इति ब्रह्मेतिवेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेतिनैयायिकाः । अर्हन्नित्यथ जैनशास्त्रनिरताः कर्मेति मीमांसकाः सोयं नो विदधातु वाञ्छितपदं षड्दर्शनाढ्यः शिवः ॥ स्वात्मने शिवस्वरूपाय समालभनं

गन्धोनमः अर्घोनमः पुष्पं नमः ॥ संसारमरुकान्तारमहा-
मोहनिवृत्तये । तदिदममृतं चक्षुर्दीपोयं शिवगृह्यताम् ॥
इति दीपे । कालाग्निरुद्ररूपं तं सर्वाघविनिषूदनम् । सर्व-
सौभाग्यजननं धूपोयं शिवगृह्यताम् ॥ इति धूपे । द्विभुजं
चैकवदनं सौम्यं पङ्कजभृत्करम् । तेजोबिम्बस्य मध्यस्थं
वर्तुलं रक्तवाससम् । आदित्यमीदृशं ध्यायेद्भोगमोक्ष-
फलप्रदम् ॥ इति सूर्ये । स्वात्मने शिवस्वरूपाय भवायदेवाय
८ प्रपन्नपारिजाताय दीपोनमः ॥ "अपसव्येन" ॥ अद्य-
तावत् पित्रे शिवगोत्राय ईश्वराय, पितामहाय शिवगोत्राय
सदाशिवाय, प्रपितामहाय शिवगोत्राय शिवाय ॥ मात्रेशिव-
गोत्रायै बलविकरिण्यै, पितामह्यैशिवगोत्रायै बलप्रमथिन्यै,
प्रपितामह्यै शिवगोत्रायै सर्वभूतदमन्यै ॥ एवं । मातामहाय
शिवगोत्राय ईश्वराय ॥ मातामह्यै शिवगोत्रायै बलवि-
करिण्यै इत्यादि समस्तमातापितृभ्योद्वादशदैवतेभ्यः
पितृभ्यः सांवत्सरिकेशिवश्राद्धे दीपःस्वधानमः धूपःस्वधा-

नमः ॥ "सव्येन" ॥ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि । तन्नः शिवः प्रचोदयात् ३ ॥ "अपसव्येन" ॥ अग्निष्वात्तेभ्यो वि-वर्हिषद्भ्यो धी-। तन्नः सोमः प्र-। ३॥ अद्यतावत् पितुः शिवगोत्रस्य ईश्वरस्य "इत्यादि" समस्तमातापितॄणां द्वादशदैवतानां सांवत्सरिकं शिवश्राद्धं अनन्तभुवनात्सदाशिवभुवनं तावच्छिवसायुज्यार्थं शिवपीठोपरि अन्नं परिकल्पयामिनमः ॥ ॐनमोविष्णवे सुरपतये महाबलाय सोमकोटिसोमधामप्रयाणे सोमाय ठः ठः अमृतोद्भवाय अमृतकलनाय सोमायाऽन्नाय वौषट् ॥ "सव्येन" ॥ द्वारेशा नवरन्ध्रगाहृदयगो वास्तुगणेशोमनः शब्दाद्या गुरवः समीरदशकं त्वाधारशक्त्यात्मकम् । चिद्देवोऽथ विमर्शशक्तिसहितं षाड्गुण्यमङ्गावलिर्लोकेशाः करणानि यस्य महिमा तं नेत्रनाथं स्तुमः ॥ पुष्पाञ्जलिप्रमाणेन सम्मुखं भावयेद्विभुम् । विभोः सपरिवारस्य स्वागतमित्युदीरयेत् ॥ "स्वागतं, सुस्वागतं शिवस्य सपरिवारस्य भोः" ॥

आत्मासनायनमः । दिङ्मातृभ्योनमः ॥ ॥ सुधाकलश-सत्पुष्पमालाहस्ताः सुशोभनाः । आकाशमातर एकवक्त्रा देवस्य संमुखाः ॥ उमायैनमः, दुर्गायै, भद्रकाल्यै, स्वस्त्यै, स्वाहायै, शुभङ्कर्यै, श्रियै, गौर्यै, भूतदात्र्यै, वागीश्वर्यै, दिङ्मातृभ्यः, वृषभाय, भृङ्गीशाय, कुमाराय, अम्बिकायै, द्वारश्रियै, सरस्वत्यै, लक्ष्म्यै, गणपतये, प्रभामण्डलाय, नन्दिने, गङ्गायै, मेषास्याय, दण्डिने, महाकालाय, यमुनायै, छागलास्याय, महोदराय, वास्तुपुरुषाय, ब्रह्मणे, सर्वेभ्योभूतेभ्योनमः ॥ ॥ अपसर्पन्तु ते भूता ये दिवि भुवि संस्थिताः । ये दिक्षु विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ पाषाण्डकारिणोभूत्वा पिशाचाः प्रेतराक्षसाः । अपसर्पन्तु ते सर्वे दिव्यास्त्रेण तु ताडिताः ॥ ॥ "प्राणायामः" ॥ ॐ १६ "पूरकं" । ॐ ६४ "कुम्भकं" ॐ ३२ "रेचकं" इतिजपेत् ॥ ॥ ॥ (स्ववामेऽधः शाखायां गणपति-पूजा ) ॥ "वायव्ये" ॥ बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ता-

क्षसूत्रे शुभे वामे मोदकपूर्णपात्रपरशू नागोपवीती त्रिदृक् । श्रीमान्सिंहयुगासनः श्रुतियुगे शङ्खौ वहन्मौलिमान्दिश्यादीश्वरपुत्र एष भगवांल्लम्बोदरः शर्म नः ॥ अस्य श्रीमहागणपतिमन्त्रस्य, ब्रह्माऋषिः, गायत्रंछन्दः, महागणपतिर्देवता, गंबीजं, ह्रींशक्तिः, कुरुकुरु कीलकं, पूजनेविनियोगः ॥ गांहृ-गींशिर-गूंशिखा-गैंकव-गौंनेत्राभ्यांः, गः अस्त्रायफट् ॥ ॥ तत्पुरुषायवि-वक्रतुण्डायधी- । तन्नोदन्ती प्र- । ३ ॥ गजवदनमऽचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं बृहदुदरमऽनन्तं, दन्तमाले दधानम् । परशुचषकपद्मयुग्महस्तारविन्दं हरियुगलनिविष्टं श्रीगणेशं भजामि ॥ ॥ ॐ अनन्तायनमः, पद्मासनाय, सिंहासनाय, ग्लूंगंगणपतये, ग्लूंसः गणपतिवल्लभायै, "गां" इत्यङ्गानि । गंगणराजाय, गांलम्बोदराय, गांगणेशाय, गांविरूपाक्षाय, गांविभीषणाय, गांविघ्नेशाय, गांदीर्घनासाय, गांइभाननाय, गुरुवे, परमगुरवे, परमेष्ठिने, परमाचार्याय, आद्यसिद्धेभ्यो, स्व-

गुरवे, क्षांक्षेत्रपालाय, हांवागीश्वर्यै, ॐघोरदंष्ट्राय, ॐ-विरूपाक्षाय, काकतुण्डाय, चिल्लवक्राय, उदुम्बराय, गांगणपतये, संसरस्वत्यै गङ्गायै, महाकालाय, यमुनायै, चण्डायै, प्रचण्डाय, दण्डिने, महोदराय, वैश्रवणायराज्ञे, गांमूर्तये, गांगणेश्वराय, समालभनं गन्धादि- ॥ ॥ ("ततः पश्चिमे मध्यबृहच्छाखायां" कुमारपूजा ) घण्टां सुवर्णर-चितां रुचिरां पताकां शक्तिं दधानमपि चारुशिखण्डि-राजम् । भूयात्सदर्तवदनो भवतां विभूत्यै बद्धस्थितिर्व-यसि बालवयाः कुमारः ॥ ॥ अस्य श्रीकुमारमन्त्रस्य, ब्रह्माऋषिः, गायत्रं छन्दः, कुमारोदेवता, कंबीजं क्रूंशक्तिः, कौंकीलकं, पूजने विनियोगः ॥ कांह्र-कींशि-॥ कार्तिकेया-यवि-सेनाधिपतयेधी-। तन्नः कुमारः प्र-। ३ ॥ ॐक्रीं-क्रांकुमारायनमः ॥ ॥ (स्वदक्षेऽधः शाखायां सूर्यपूजा) धवलाम्भोरुहासीनं दाडिमीकुसुमप्रभुम् । स्फुरद्रत्नमहा-तेजोवृत्तमण्डलमध्यगम् । अंसासक्तस्फुरच्छ्वेतसनाला

ब्जकरद्वयम् । एकास्यं चिन्तयेद्भानुं द्विभुजं रक्तवाससम् ॥ सूर्यं सौवर्णवर्णं मुनिगणनमितं चारुहासं त्रिनेत्रं रक्ताब्जं सुर्णकुम्भं सुरुचिरवसनं धारयन्तं भुजाभ्याम् । वामे च्छायासमेतं रथवरवहनं शुक्लपर्णाब्जमध्ये तिष्ठन्तं स्थूलसूक्ष्मं सकलजननुतं ध्यानकाले भजेऽहम् ॥ ॥ अस्य श्रीसूर्यमन्त्रस्य ब्रह्माऋषिः, गायत्रं च्छन्दः, सवितादेवता, ह्रांबीजं, ह्रींशक्तिः, ॐकीलकं, पूजने विनियोगः ॥ ह्रांहृदयायनमः । सूर्यरूपायवि-सूर्यज्ञानायधी-। तन्नः सूर्यः प्रचोदयात् । ३॥ विश्वप्रकाशायवि-विश्वज्ञानायधी । तन्नः सूर्यः प्र-। ३ ॥ ह्रांपद्मासनायनमः, आं अर्कासनायनमः, ह्रांखशोल्कायसूर्यमूर्तये, ह्रांह्रींहंसःसूर्याय, अंहृदयायनमः, अर्काशिरसेस्वाहा, ॐभूर्भुवःस्वःज्वालिन्यैशिखायैवषट्; हूंकवचायहुं, भांनेत्राभ्यांवौषट्, रः अस्त्रायफट्, अंदण्डिनेनमः, अंपिङ्गलाय, ॐगुरुभ्यः, अंविमलायै, अंअमायै, रांदीप्ताय, रींसूक्ष्माय, रुंजयाय, रूंभद्रकाल्यै, रेंविभूतायै, रैंविमलाय, रोंअमो-

घाय, रौंविद्युताय, रंसर्वतोमुखायनमः । ३ ॥ (दक्षिणेऊ र्ध्वोर्ध्वपंक्तिक्रमेण ग्रहपूजा) अग्न्यादित्याभ्यांनमः, वरुणच न्द्रमोभ्यां, कुमारभौमाभ्यां, विष्णुबुधाभ्यां, इन्द्राबृहस्पतिभ्यां, सरस्वतीशुक्राभ्यां, प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां, रुद्रकेतुभ्यां, ब्रह्मध्रुवाभ्यां, अनन्ताऽगस्त्याभ्यांनमः । ११ "भगवन्तोग्रहाः सर्वे येऽन्ये चोपग्रहा मताः । ते सर्वे सन्निधानं मे कुर्वन्तु विघ्नशान्तये ॥ ४॥ (दक्षिणे मध्यशाखायां दुर्गापूजा)॥ दूर्वानिभां त्रिनयनां विलसत्किरीटां शङ्खाब्जखड्गशरखेटकशूलचापान् । सन्तर्जनीं च ददतीं महिषासनस्थां दुर्गां नवारकुलपीठगतां भजेऽहम् ॥ ॥ अस्य श्रीदुर्गामन्त्रस्य, महेश्वरऋर्षिः, अनुष्टुप्छन्दः, दुर्गादेवता, दुंबीजं, ह्रीं शक्तिः, ॐकीलकं, पूजने विनियोगः ॥ ॐह्व,-ह्रींशिर,-दुंशिखा,-दुर्कव,-गानेत्रा-यैनमःअस्त्रायफट् ॥ सुभगायैविद्महे, काममालिन्यैधीमहि । तन्नोदुर्गाप्रचो- । ३॥ ॐह्रींदुंदुर्गायैनमः सिंहासनाय । "सा मे भवतु सुप्रीता

गौरी शिखरवासिनी । उग्रेण तपसा लब्धो यया पशु-पतिः पतिः" ॥ ॐगौंगौर्यासनाय, ॐगौंमूर्त्यै, ॐह्रींसः महागौरि रुद्रदयितेस्वाहा "मूलं" गांहृदया० ॥ ॥ (आग्नेय्ये-ऽधःशाखायां लक्ष्मीवासुदेवपूजा ) ॥ श्वेतैः शंखगदाब्ज-चक्रसहितैः सव्यैर्भुजैरङ्कितं वामैः पुस्तकदर्पणाग्रनलिनी-कुम्भानुशार्ङ्गं सदा । राजन्तं गरुडाधिरूढमधिकं भक्ता-नुकम्पास्पदं लक्ष्म्यार्धाङ्कितमद्य नौमि वरदं श्रीवासुदेवं विभुम् ॥ ॥ अस्य श्रीलक्ष्मीवासुदेवमन्त्रस्य, शिवऋषिः, त्रिष्टुप्-छन्दः, लक्ष्मीवासुदेवो देवता, पूजनेविनियोगः ॥ ॐह्रांविमल-ज्ञानसद्भावायहृदयायनमः । ह्रींसर्वैश्वर्यमूर्तयेशिर- । ॐह्रूंसर्व-शक्तिस्वरूपायशिखा- । ह्रैं अनन्तबलरूपिणेकव- । ह्रौंअप-रिमिततेजसेनेत्रा- । ह्रः अप्रतिहतवीर्याय अस्त्राय- ॥ वासुदे-वायवि-लक्ष्म्यर्धायधी- । तन्नोविष्णुः प्र- । ३ ॥ ॐह्रूंह्रींल-क्ष्मीवासुदेवाय नमः १०८ । ॐह्रांमहालक्ष्म्यैनमः १०८ । क्षेत्रपालाय, द्वारश्रियै, [illegible], जयाय, विजयाय, [illegible]-

निधये, पद्मनिधये, ॐपितृभ्यःस्वधानमः, गणपतयेनमः, वास्तुपुरुषाय, पृथिव्यै, सरस्वत्यै, गुरुभ्योनमः ॥ "ततोऽङ्गषट्कं मूलेनाऽत्मपूजांच" ॥ आधारशक्त्यैनमः, कूर्माय, अनन्ताय, पृथिव्यै, क्षीरार्णवाय, कालाग्निरुद्राय पद्मासनाय धर्माय इत्यासनं । "तदुपरिभगवन्तमावाहयेत्" ॥ भगवन्भूतभव्येश मदनुग्रहणोद्यत । आवाहितोसि विश्वेश गृहाणास्मत्कृतंजपम् ।' इत्यावाह्य पुनर्मूलं । रहरऊंगरुडायनमः, सःसर्वैश्वर्याय, नंनलिन्यै, पंपद्मिन्यै, सूयसोममण्डलाय, प्रधानपुरुषईश्वरतत्त्वाय, पंपद्माय, हंशङ्खाय, ईंचक्राय, कूंकमण्डलवे, आंदर्पणाय, ऐंपुस्तकाय, अक्षसूत्राय, ईंनलिनीनालाय, किरीटाय, कौस्तुभाय, श्रींश्रीवत्साय, वनमालायैनमः ॥ "ततोगुरुपूजा" ॥ ॐगुरवेनमः, परमगुरवे, परमेष्ठिने, परमाचार्याय, आद्यसिद्धेभ्यः ॥ आंक्षांवास्तुक्षेत्रपालायनमः स्वगुरवेनमः ॥ ॥ (पूर्वमध्यशाखायां त्रिपुरसुन्दरीपूजा) ॥ त्र्यर्णा त्र्यश्रनिविष्टमूर्तिरधिका मुद्रात्रयो-

द्भासिता या धत्तेऽङ्कुशपाशबाणनिचयं चापं चतुर्भिर्भुजैः । देवीभिस्त्रिसृभिस्तथाष्टभिरथो दिग्दिङ्मनुख्यातिभिर्वस्वऽष्टिप्रणताभिरष्टभिरथो जीयाज्जगन्मातृका ॥ गणेशवटुकस्तुता- ॥ ॥ "अस्य श्रीत्रिपुरसुन्दरीमन्त्रस्य, दक्षिणामूर्तिर्ऋषिः,पङ्क्तिच्छन्दः । त्रिपुरसुन्दरीदेवता, श्रींबीजं, ह्रींशक्तिः क्लींकीलकं, पूजनेविनियोगः" ॥ श्रांहृ-श्रीं ॥ ऐंत्रिपुरादेव्यैविद्महे, क्लींकामेश्वर्यैधीमहि । सौंतन्नः क्लिन्नः प्रचो ३ ॥ परब्रह्मात्मके महाचक्रेबैन्दवे महात्रिपुरसुन्दर्यैऽम्बापादुकाभ्योनमः ॥ "सौंक्लींऐं हृद-सौंक्लींऐं शिरसेस्वाहा" इति ॥ ॥ (ईशानेऽधः शाखायां मृत्युञ्जयपूजा ) ॥ ॥ देवं सुधाकलशेति ॥ चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तः स्थितं मुद्रापाशसुधाऽक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् । कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥ ॥ अस्य श्रीमृत्युञ्जयमन्त्रस्य महाचमसकोहलऋषिः, गायत्रंछन्दः, मृत्युञ्जयोदेवता, ॐबीजं

जुंशक्तिः, सःकीलकं, पूजनेविनियोगः ॥ ॐहृ-जुंशिर-सःशिखा-ॐकव-जुंनेत्र-सःअस्त्रा-॥ अमृतेशायवि-व्योमदेहायधीमहि। तन्नोनेत्रः प्र-। ३ ॥ ॐजुंसःहंसःमांपालयपालयसोहं-सःजुंॐ १०८ ॥ ॥ चन्द्रार्धमौलिमऽतिसुन्दरमाऽदिदेवं पूर्णेन्दुबिम्बवदनं कमलासनस्थम् । पीयूषपात्र-कलशाब्जवराऽभयाढ्यं देवं त्रिनेत्रममृतेश्वरमाश्रयामि ॥ ॐजुंसः अमृतेश्वरभैरवायनमः ॥ ॐजुंसःअमृतलक्ष्म्यै-नमः ॥ ॐजुंसः अमृतेश्वरमूर्तये सर्वभूतान्तरात्मने व्योम-व्यापिने व्योमशरीराय सर्वसमयलोपान्निवारय २ सर्वस-मयां पूरय पूरय सर्वसाधारणमन्त्रशरीरायह्रींस्वाहा ॥ॐजुंसः अमृतेपरामृतेनित्ये क्लींसः अमृतेश्वरि सर्वभूतान्तरस्थे ब्रह्मस्वरूपे महाव्योमशरीरे सर्वसमयां पूरय २ अमृतल-क्ष्म्यैस्वाहा ॥ "मूलं" ॥ ॐजुंसः अमृतलक्ष्म्यैनमः १०८॥ ॐजुंहृदयायनमः, व्योंशिर-, ईंशिखा-, हूंकव-, ज्योंनेत्र-, फट्अस्त्रायफट् ॥ ( उत्तरे मध्यशाखायां भद्रकालीपूजा ) ॥

श्यामां श्याममुखीं विलोलवपुषीं सत्कोटराक्षीं शिवां
विंशद्ब्युत्तररूपिणीं मधुमदोन्मत्तां च रक्ताम्बराम् । ब्रह्मा-
मुण्डशिवाभिविष्णुरशनाहस्तामऽनङ्गोज्वलां प्रेतस्थां हृद-
याम्बुजे भगवतीं भैंभद्रकालीं भजे ॥ ॥ अस्य श्रीभद्र-
कालीमन्त्रस्य ब्रह्माऋषिः, अनुष्टुप्छन्दः, भद्रकालीदेवता, भैंबीजं,
ह्रींशक्तिः, क्रूंकीलकं, पूजनेविनियोगः ॥ क्रींक्रींक्रींहृद- ।
ह्रूंह्रूंशिर- । ह्रीह्रींशिखा- । भैंभद्रकालीकव- । ह्रींह्रींह्रूंह्रूंनेत्र
क्रींक्रींक्रींअस्त्रायफट् ॥ ॐभैंभद्रकाल्यैविद्महे, कालरात्र्यैधी-
महि । तन्नोभद्रकालीप्रचोदयात् ३ ॥ क्रींक्रींक्रींह्रूंह्रूंह्रींह्रीं
भैंभद्रकालिभैंह्रींह्रींह्रूंह्रूंक्रींक्रींक्रींस्वाहा १०८ ॥ ॥
(कर्णिकायां) ॥ ब्रह्मादिकारणातीतं स्वशक्त्यानन्दनिर्भरम् ।
नमामि परमेशानं स्वच्छन्दं वीरनायकम् ॥ त्रिपञ्चनयनं देवं
जटामुकुटमण्डितम् । चन्द्रकोटिप्रतीकाशं चन्द्रार्धकृतशेख-
रम् ॥ पञ्चवक्त्रं विशालाक्षं सर्पगोनासमण्डितम् । वृश्चिकैर-
ग्निवर्णाभैर्हारेण तु विराजितम् ॥ [illegible] -

खेटकधारिणम् । पाशाङ्कुशधरं देवं शरहस्तं पिनाकिनम् ॥ वरदाभयहस्तं च मुण्डखट्वाङ्गधारिणम् । वीणाडमरुहस्तं च घण्टाहस्तं त्रिशूलिनम् ॥ वज्रदण्डकृताटोपं परश्वायुध-हस्तकम् । मुद्गरेण विचित्रेण धृतेन तु विराजितम् ॥ सिंहचर्मपरिधानं गजचर्मोत्तरीयकम् । अष्टादशभुजं देवं नीलकण्ठं सुतेजसम् ॥ ऊर्ध्ववक्त्रं महेशानि स्फाटिकाभं विचिन्तयेत् ॥ आपीतं पूर्ववक्त्रं तु नीलोत्पलदल-प्रभम् ॥ दक्षिणं तु विजानीयाद्वामं चैव विचिन्तयेत् । दाडिमकुसुमप्रख्यं कुङ्कुमोदकसन्निभम् ॥ चन्द्रार्बुधप्रती-काशं पश्चिमं तु विचिन्तयेत् । स्वच्छन्दभैरवं देवं सर्व-कामफलप्रदम् ॥ ध्यायेद्वै यस्तु युक्तात्मा क्षिप्रं सिद्ध्यति मानवः । पूर्वं या सा मया ख्याता अघोरा शक्ति-रुत्तमा ॥ यादृशं भैरवं रूपं तस्यास्तादृशमेवहि । भैरवं पूजयित्वा तु तस्योत्सङ्गगतां स्मरेत् । ईषत्करालवदनां गम्भीरविपुलस्वनाम् । प्रसन्नास्यां सदा ध्यायेद्भैरवीं

विस्मितेक्षणाम् ॥ नमस्तस्मै ह्यऽघोराय घोरघोरतरात्मने ।
उत्पत्तिस्थितिसंहारलयानुग्रहहेतवे ॥ (एवं ध्यात्वा मानसोपचारैः संपूज्य) ॥ वामे खेटकपाशशार्ङ्गविलसद्दण्डं च वीणाण्टिके बिभ्राणं ध्वजमुद्गरौ स्वनिभदेव्यङ्कं कुठारं करे। दक्षेऽस्यङ्कुशकन्दुलेषुडमरून्वज्रत्रिशूलाभयं रुद्रस्थं शरवक्रमिन्दुधवलं स्वच्छन्दनाथं स्तुमः ॥ ॥ अस्य श्रीअघोरभैरवमन्त्रस्य श्रीकालाग्निरुद्रभैरवऋषिः, अनुष्टुप्छन्दः, श्रीबहुरूपः अघोरेश्वरः परमात्मा देवता, ॐबीजं, हूँशक्तिः, कुरुकुरुकीलकं पूजनेविनियोगः ॥ ॥ अघोरेभ्यः सर्वात्मने अङ्गुष्ठा-,ऽथघोरेभ्योब्रह्मतर्जनी-। घोरघोरतरेभ्यश्चज्वलिन्यैमध्यमा-। सर्वतःशर्वसर्वेभ्योपिङ्गलाय अनामिकाभ्यां-। ॐजुंसः ज्योतीरूपायकनिष्ठि-। नमस्ते रुद्ररूपेभ्योदुर्भेद्यायमहापाशुपतास्त्राय करतल- ॥ ॥ एवं षडङ्गन्यासः ॥ बहुरूपायविद्महे, कोटराक्षाधी- । तन्नोऽघोरःप्रचो- । ३ ॥ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यश्च । सर्वथा शर्व सर्वेभ्यो नमस्ते रुद्ररू-

प्रेभ्यः १०८ ॥ ( अथाघोरेश्वर्याः ) नौम्यहं तां परंब्रह्मम
हिषीं चित्स्वरूपिणीम् । ब्रह्मादिकारणातीतां परानन्दमयीं
शिवाम् ॥ बहुरूपायवि-अघोरेश्वर्यैधी-तन्नोऽघोरीप्र-। ३ ॥
परात्मिकायैवि-चित्स्वरूपिण्यैधी- । तन्नः शक्तिः प्र । ३॥
ह्रांहृदयायनमः ॥ ॥ मूलं ॐह्रींअघोरेश्वरिहूंफट्स्वाहा १०८
अस्य श्रीनिष्कलेश्वरमन्त्रस्य, सदाशिवऋषिः, अनुष्टुप्छन्दः,
श्रीसच्चिदानन्दरूपः परमशिवः परमात्मादेवता,पूजनेविनियोगः॥
"ह्रांहृ"- । विश्वैकरूप विश्वात्मन् विश्वसर्गादिकारणम् ।
परप्रकाशवपुषं स्तुमः स्वच्छन्दभैरवम् ॥ विश्वातीतं विश्वमयं
भैरवाष्टकसंयुतम् । सुशान्तं निष्कलं शुद्धं सर्वव्यापि निर-
ञ्जनम् । चिद्बोधानन्दगहनं तेजः सर्वाश्रयं भजे ॥ मध्यप्रा-
णनिविष्टहंसपरमा यो रोमकूपाश्रयः प्राणः सूक्ष्मविमर्शशा-
लिवपुषः सार्धत्रिकोट्यात्मकः । तान्मन्त्रात्मतया विलोमय-
ति यः स्वच्छन्दनाथः परोदेवोऽसौ विदधातु भैरववपुस्तेजः
परं शाश्वतम् ॥ॐहूंनिष्कलस्वच्छन्दभैरवायस्वाहा१०८"ह्रां-

हृदयायह्रीं"। क्षंईशानवक्त्रायनमः,यंतत्पुरुषव-। रंअघोरव-। वंवामदेवव-। लंसद्योजातवक्त्रायनमः,कपालेशादिभ्यो नमः खड्गाद्यायुधेभ्योनमः । (अथ सप्तावरणपूजा) ह्रींअनन्ताय, सूक्ष्मायनमः, शिवोत्तमाय, क्रूंएकनेत्राय, रंएकवक्त्राय, क्षां एकरुद्राय, ऊंल्लूंत्रिमूर्तये, हूंह्रींश्रीकण्ठाय, श्रींशिखण्डिने-नमः ।१। रांरींरूंनन्दिने, सांसींसूंमहाकालाय, हूंसांभृङ्गि-रुद्राय, गूंगंगणपतये, व्रांवृषभाय, कुंकुमाराय, ह्रींसः अम्बिकायै,हूंसूंचण्डीश्वरायनमः ।।२। ॐलंइन्द्रायवज्रहस्ता-यनमः, रंअग्नयेशक्तिह, टंयमायदण्डह-। क्षंनैर्ऋतयेखड्गह-। वंवरुणायपाशह-।यंवायवेध्वजह-। कुंकुबेरायगदाह-। शूंई-शानायत्रिशूलह-। आंब्रह्मणेपद्मह-। ह्रांअनन्तायहलहस्ताय-नमः । ३ ।। जमरयऊंजयायैनमः, क्षसरूंविजयायै रांसुभ-गायै यांदुर्भगायै,समरयऊंजयन्त्यै, समरयऊंऊहिन्यै,हसर-यऊंअपराजितायै, झंकरालयैनमः । ४ । ह्रांह्रींसः सूर्याय-नमः, सहरऊंचन्द्रमसे, रहरऊंअङ्गारकायनमः, सहलऊं

बुधाय, रसऊंजीवाय, ह्रींभार्गवाय, क्षरमयऊंशनैश्चराय, गलूंराहवे, ह्रींकेतवे, ॐध्रुवाय, ॐअगस्त्यायनमः । ५ । अनन्तनागराजायनमः, वासुकिना-, पद्मना-, महापद्मना-, तक्षकना-, कार्कोटकना-शङ्खपालना-, कुलिकनागराजाय-नमः ।६। ॐवज्रायफट्नमः, शक्तयेफट्नमः, दण्डाय-फट्नमः-,खड्गाय-, पाशाय-, ध्वजाय-,गदायै-,त्रिशूलाय-, पद्माय-, हलाय, वराय, अभयाय, मुद्गराय, कृपाणाय, घण्टायै,डमरवे,परशवे,खेटकायफट्नमः ।७।। जम्बुद्वीपाय, प्लक्षद्वी-,शल्मलि,कुशद्वी,क्रौञ्च, शाक,पुष्करद्वीपायनमः ॥ क्षारसमुद्राय, इक्षुसमुद्रय, सुरास,घृत, दधि,क्षीर,स्वादूदक-समुद्रायनमः ॥ भवायदेवायक्षितिमूर्तये,शर्वायदेवायजल-मूर्तये, रुद्रायदेवायाऽग्नि, पशुपतयेदेवायवायु, उग्रायमूर्तये-नमः देवायाऽकाश, महादेवायसूर्य, भीमायदेवायसोम, ईशानायदेवाययजमानमूर्तयेनमः ॥ कपालेश्वरभैरवाय,शि-खिवाहन,क्रोधराजभै, विकरालभै, मन्मथ,मेघनाद,सोम-

राज, विद्याराजभैरवाय, एतन्मण्डलमध्यगतस्वच्छन्दभैरवायनयः ॥ आत्मतत्त्वाय, विद्यातत्त्वाय, शिवतत्त्वाय, इच्छाशक्तये,ज्ञानशक्तये,क्रियाशक्तये,मन्त्राध्वनेनमः, पदाध्वने, भुवनाध्वने, वर्णाध्वने, तत्त्वाध्वने, कलाध्वने निवृत्तिकलायैनमः,निवृत्तिकलाधिपतयेब्रह्मणे,प्रतिष्ठाकलायै, प्रतिष्ठाकलाधिपतयेविष्णवे, विद्याकलायै,विद्याकलाधिपतयेरुद्राय, शान्ताकलायै, शान्ताकलाधिपतयेईश्वराय, शान्त्यतीताकलायै, शान्त्यतीताकलाधिपतयेसदाशिवायनमः॥ सर्वज्ञताहृ-। तृप्तिशिरसेस्वाहा, अनादिबोधशिखायै, स्वतन्त्रताकवचा-, अलुप्तनेत्राभ्यांवौषट्, अनन्तशक्तयेअस्त्रायफट् ॥ खड्गायनमः,खेटकाय,पाशाय, अङ्कुशाय,शरायनमः, पिनाकाय, वराय, अभयाय, मुण्डाय,खट्वाङ्गाय, वीणाय, डमरवे, घण्टाय, त्रिशूलाय, वज्राय, दण्डाय, परशवे, मुद्गराय, क्षंतारादिभ्यईशानकलाभ्यः, यंशान्त्यादिभ्यस्तत्पुरुषकलाभ्यः, रंउमादिभ्योऽघोरकलाभ्यः,वंरजादिभ्यो-

वामदेवकलाभ्यः, लंसिद्धादिभ्यः सद्योजातकलाभ्योनमः। गणसहिताय ईश्वरायनमः, उमास-शिवाय, कांत्यायनीस-रुद्राय, गौरीस-वृषाकपये, कात्यायनीस-हराय, हैमवतीस-त्र्यम्बकाय, ईश्वरीस-श्रीकण्ठाय, शिवास-भवाय, भवानीस-ईशानाय, रुद्राणीस-शर्वाय, शर्वाणीस-महादेवाय, सर्वमङ्गलास-पशुपतये, अपर्णास-परमेश्वराय, पार्वतीसहितायशिवाय अर्घोंनमः पुष्पंनमः॥ (धूप चढ़ाना)॥ महादेव महेशान जगदीश निरञ्जन। धूपं गृहाणदेवेश साज्यं गुग्गुलकल्पितम्॥ भवायदेवाय ८ सपरिवाराय धूपं परिकल्पयामिनमः॥ (रत्नदीप चढ़ाना)॥ हिरण्यबाहो सेनानीरोषधीनांपते शिव। दीपं गृहाण कर्पूरकपिलाज्यत्रिवर्तकम्॥ भवायदेवाय ८ रत्नदीपं परिकल्पयामिनमः॥ चामरं रजनीनाथमरीचिप्रभमुत्तमम्। हेमदण्डयुतं देव गृहाण गिरिजाधव॥ "जय सर्वजनाधीश" इति भवायदेवाय८ चामरं परिकल्पयामिनमः॥ तालवृत्तोद्भवं दिव्यं रत्नमञ्जीरमण्डितम्। सुखवातालयं

शम्भो व्यञ्जनं प्रतिगृह्यताम् । भवायदेवाय चामरंनमः ॥ (आईना चढ़ाना) ॥ यस्य प्रसादमात्रेण विश्वं दर्पणबिम्बवत् । तस्मै ते परमेशाय मुकुरं कल्पयाम्यहम् । भवायदेवाय आदर्शं परिकल्पयामिनमः ॥ नवरत्नमयं दिव्यं मुक्ताजालविभूषितम् । गृहाण छत्रं भगवन् पूर्णेन्दुमण्डलप्रभम् । छत्रंनमः ॥ मृडानीशान मे सर्वानऽपराधानऽनेकधा । क्षम स्वामिन्प्रणामंमेगृहाणाऽष्टाङ्गसंयुतम् ॥ इति नमस्कारः ॥ भवायदे० वासोनमः ॥ गणसहितस्येश्वरस्य उमासहितस्य शिवस्याऽर्घ्यदानाद्यऽर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ अन्नंनमः २ । "फट्अस्त्रायफट्" । भवायदेवाय अपोशानं नमः ॥ "फट् अस्त्रायफट्" । भवायदेवाय दक्षिणायै तिल- ॥ अपसव्येन । पितुः शिवगोत्रस्येश्वरस्य तस्य सांवत्सरिकेशिवश्राद्धे शिवप्रीत्यातिलाम्भसा पुण्यवृद्धिरस्तु स्वर्गप्राप्तिरस्तु शिवः प्रीतोऽस्तु सव्येन ॥ पुष्पाणि सन्तु तव देव मदिन्द्रियाणि धूपो गुरुर्वपुरिदं हृदयं प्रदीपः । प्राणा हवींषि

करणानि नवाक्षतास्ते पूजाफलं व्रजतु साम्प्रतमेष जीवः ॥ वाञ्छामि नाहमपि सर्वरसाधिपत्यं नेच्छे पुरन्दरपदं न पदं विधातुः । भूयो भवामि यदि जन्मनिजन्मनि स्यां त्वत्पादपङ्कजलसन्मकरन्दभृङ्गः ॥ जन्मानि सन्तु मम देव शताधिकानि माया च मे विशतु चित्तमबोधहेतुः । किञ्च क्षणार्धमपि त्वच्चरणारविन्दान्मापैतु मे हृदयमीश नमो नमस्ते ॥ अमृतेशमुद्रया सावित्राणि-ॐनमो नैवेद्यं ॥ ततोऽर्घेनदीपं संकल्पयेत् । नमोऽस्तु ते महादेवि सर्वोपद्रवनाशिनि । इच्छारूपे स्वभावस्थे नित्ये नित्यात्मके शिवे । कलाकलङ्करहिते भावभावान्तमध्यगे । अव्यक्ते कलनातीते शान्ते नित्येऽलये परे । लयोदयविनिर्मुक्ते नित्यतृप्ते निरामये । शक्तिबीजस्वभावस्थे चण्डीकापालिनीश्वरि । स्वाहाकारे स्वधाकारे परिपूर्णे कृपापरे । त्वं देवी सर्वदेवानां व्यापकर्त्री न संशयः । त्वया व्याप्तमिदं शैवं भूतसर्गं चराचरम् । स्वचक्रयोगिनीनां तु पारम्पर्यक्रमागतम् । अद्या-

साकं कृतार्थाय सन्निधानं कुरु प्रभो ॥ ॐरक्तायैनमः, करालयै चण्डाक्ष्यै महोच्छ्वासायै करालिन्यै भीमवक्त्राय, दन्तुरायै महाबलायै ॥ ॥ चण्डी शूलकपालखड्गछुरिकाखट्वाङ्गमुण्डाण्ठिकारावैर्भूषितवामदक्षिणकरा वर्णैर्नवैर्भास्वरा । कल्पान्ताग्निसमप्रभैकवदना प्रेतोपरिस्थापिता देवी दूतिभिरावृता भगवती कुर्यात्स्वधाम्नि स्थितिम् ॥ ह्रींचण्डीकपालिनिस्वाहा १०८ । "अपसव्येन" । यमान्तकायैविद्महे,कालरात्र्यैधीमहि । तन्नश्चण्डी प्रचोद-३ ॥ अद्यतावत्-पितुः शिवगोत्रस्य ईश्वरस्य सांवत्सरिके शिवश्राद्धे तस्य परलोके प्रकाशवृद्ध्यर्थं घोरान्धकारनिवारणार्थं इमं चण्डीदीपं परिकल्पयामिनमः ॥ ॥ "सव्येन" ॥ चण्ड्यै महालक्ष्म्यै अम्बापादकाभ्यो नमोनैवेद्यं निवेदयामिनमः ॥ ततः श्राद्धविधिं विसृज्य ॥ "सव्येन" तन्महेशायविद्महे ३ ॥ अद्यतावत्० महागणपतेः—कलशपूजनमच्छिद्रं ॥ आपन्नोऽस्मि० । अन्नपुरे पुष्पाणि ॥ सभार्यस्त्रिजगन्नाथ

दासस्तेऽहं व्यवस्थितः। कुरु पापक्षयं चाद्य देव्या सार्धमितस्ततः॥ सपुत्रदारः सघनः प्रभो दासोऽस्म्यऽहं तव। पालनीयः प्रयत्नेन यावच्चन्द्रदिवाकरौ ॥ संसारार्णवमग्नानां मत्पूर्वाणां महेश्वर। मदऽनन्तरजातानां मम मातृकुलस्य च ॥ पतितानामऽनाथानां विषयेष्वऽभिलाषिणाम्। अन्येषां लुप्तपिण्डानां त्वमेवोद्धरणक्षमः॥ यत्किञ्चिद्विधिना हीनं कृतं मूढधिया मया। क्षन्तव्यं भो त्वया नाथ सर्वं च परमेश्वर ॥ भगवन्मत्कुलोत्पन्ना ये जाताः स्वल्पबुद्धयः। दारिद्र्योपहता ये च दानधर्मविवर्जिताः ॥ कुम्भीपाके निमग्नाश्च ये चान्ये दुःखिता नराः। मुक्तिं ते यान्तु मनुजास्त्वत्प्रसादान्महेश्वर॥ भगवन् भूतभव्येश मया चाऽज्ञानशक्तितः। ऊनाधिकं विपर्यस्तं यत्किञ्चिद्विहितं प्रभो ॥ द्रव्यक्रियामन्त्रहीनं पूर्णं मेऽस्तु त्वदिच्छया॥ यावती तण्डुली सङ्ख्या भवत्यन्नेन सर्वदा। तावत्कल्पसहस्राणि दाता शिवपुरे वसेत्॥

अनन्तभवनाद्विप्र यावत्सादाशिवं पदम् । पूरितं निखिलं तेन भवत्यऽन्नेन सर्वदा ॥ तावद्युगसहस्राणि शिवलोके महीयते ॥ शतं स्वर्णपुष्पाणां दत्त्वा पुण्यफलं च यत् । कोटिं स्रग्वसनानां तदनन्तं लिङ्गपूरणम् ॥ प्रयागे नैमिषारण्ये गङ्गासागरसङ्गमे । कुरुक्षेत्रे च यद्दानं राहुग्रस्ते दिवाकरे ॥ पृथिवीं सस्यसम्पूर्णां यो दद्याद्वेदपारगे । स्थानं न लभते तादृग्यादृशं लिङ्गपूरणात् ॥ भुवनान्भुवनेशांश्च तत्त्वतत्त्वानुपालकान् । तर्पयेन्मानवो धीमानन्नपूरे कृते सति ॥ ये ताराधिपखण्डशेखरमजं यक्ष्यन्ति लिङ्गान्तरे शुद्धान्तःकरणक्रियावशमयं भक्तिप्रणीतात्मकाः । ते भुक्त्वा विविधामनेन बहुशो भोगावलीमुज्वलां सायुज्यं ध्रुवमाप्नुवन्ति सहसा तस्यैव शम्भोर्नराः ॥ करचरणकृतं वाक्० ॥ अपारसंसार० । उभाभ्यां ॥ पात्राणि चालयेत् । आचम्य । उदकलकं । उत्तिष्ठ देवदेवेश त्वं मण्डलसुरैः सह । रक्षास्मान्पूर्वतो नित्यं धृततत्पुरुषाभिधः ।

तथा दक्षिणतो रक्ष धृताघोरात्मभैरवः । तथैवोत्तरतो रक्ष वामदेवोऽसि शङ्करः । वारुणाशागतो नित्यं सद्योजातोऽसि रक्ष माम् । ऊर्ध्वं रक्ष महेशान त्वमीशानोऽसि देवता । सर्वतः सर्वथा देव सर्वत्रास्मिन्भवाध्वनि । पाहि मां याहि देवेशि नित्यानन्दमयं पदम् ॥ मन्त्रार्थाः ॥ ब्राह्मण-पुष्पम् ॥ नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः । अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ इति अन्नपूरपूजाविधिः ॥ ततोऽष्टकाविधिः ॥

## अथ शिवाष्टका

"ॐस्वदक्षेऽस्त्रार्घपात्रं कृत्वा,तज्जलेन कुण्डसंस्कारं कुर्यात्" ॐ-फट् सेचनं करोमिफट् । -खननं- । मृत्स्नोद्धारं-।-कुट्टनं-।-शोषणं-। ॐफट् प्रोक्षणं करोमिफट् । ॐक्रियाशक्त्यात्मने कुण्डायनमः ॥ इति कुण्डपूजा ॥ ॐफट्वज्रीकरणं करोमि फट् । "इति कुण्डमध्ये वज्रीकरणं" ॥ कुण्डमध्ये पूर्वाग्रमेकं दर्भं तत्पृष्ठे उत्तराग्रमेकं दर्भं संस्थाप्य यथा+। इति चतुष्पथमन्त्रेण

कुर्यात् । तत्पृष्ठे विष्टरं संस्थाप्य। तत्र। वागीशासनायनमः।
ॐजुंभगवति वागीश्वरि आगच्छ २ सन्तिष्ठ २ सन्निधत्स्व
२ सन्निरुद्धाभव २ सन्निधेहि २ जुंभगवति अवगुण्ठयामि
नमः अमृतीकरोमिनमः ॥ अथध्यानं ॥ नीलोत्पलदल-
श्यामामृतुमच्चारुलोचनाम् । सर्वलक्षणसम्पूर्णां सर्वाभरण-
भूषिताम् ॥ ध्यात्वा चैवंविधां देवीं स्थापयेत्कुण्डम-
ध्यतः । ब्रह्मस्थानोपविष्टां च द्वाराभिमुखभद्रदाम् ॥
इतिध्यात्वा । ॐभगवति वागीश्वरि पाद्यं गृहाणस्वधा,
ॐभगवति वागीश्वरि अर्घ्यं गृहाणस्वधा । एवं । समा-
लभनं आदत्स्व । अक्षतपुष्पाणि गृहाणवौषट् । धूपं
गृहाणहूंफट् । दीपं गृहाणवौषट् ओंह्रांवागीश्वर्यैनमः इति
संपूज्य । ईशानशिरसमुत्तानामृतुमतीं भावयित्वा सन्नि-
धानाय योनिमुद्रां प्रदर्शयेत् । ( सूर्यकान्तादारणितः श्रोत्रि-
यागारतोऽपि वा । पात्रेण पिहिते पात्रे वह्निमानाययेत्ततः ) एवं
कांस्यपात्रस्थमग्निमानीय । ॐफट् अग्नेः प्रोक्षणं करोमिफट् ।

इति सम्प्रोक्षयेत् । ॐफट्निरीक्षणंकरोमिफट् । इति निरी-क्षयेत् । ॐफट्अग्नेरवगुण्ठनं करोमिफट् । इत्यवगुण्ठ-येत् ॥ ॐरंज्ञानशक्त्यात्मने अग्नयेनमः इति पूजयेत् ॥ ॐफट्क्रव्यादं निष्कर्षयामिफट् इति मन्त्रेणदर्भकाण्डद्वयं प्रज्वाल्यनैर्ऋतेक्षिपेत् ॥ ततस्तिलाहुतिः ॥ ॐरंअग्नेःक्रव्याद-शुद्धिं करोमिस्वाहा ५ ॥ हूंदर्भकाण्डत्रयेनाग्नेराच्छादनं करोमिहूं "इतिदर्भत्रयेणाऽग्निंप्रच्छाद्य । ततोऽग्निपात्रं हस्तद्वयेन गृहीत्वा नासाग्रेणाघ्रायाऽग्नेश्चैतन्यतया ज्वालाग्रं मूलेन गृहीत्वा वामनासापुटेन पूरकेनाऽग्निं हृदि प्रविश्य स्वचैतन्यानलेनैकी-कृत्य बहिर्दक्षनासापुटेन रेचकेन मूलमुच्चार्य पात्रे क्षिपेत्" ॥ इति चैतन्याऽपादनम् ॥ पुनर्मूलेनसाङ्गेनपूजनम् ॥ तेनैवामृतीकरणम् । स्वयं "अहमेवशिवः" इति दार्ढ्येन शिवाभिमानं गृहीत्वा वह्निं शुक्ररूपं ध्यात्वा मायां वागीशीं परिकल्प्य "ॐ वह्निं योनौ भ्रामयामिनमः"इति त्रिःपरिभ्रम्य तस्या योनौ क्षिपेत् ॥ इति कुण्डान्तरे क्षिप्त्वा पुनरस्त्रेण वह्निं प्रोक्ष्य "गर्भरक्षार्थं वागी-

शीयोनिं प्रच्छादयामिनमः" इतिदर्भैर्योनिप्रच्छादनम् ॥ "ॐफट्अक्षवाटं कल्पयामिनमः" इत्यऽष्टासुदिक्षु साग्रैरूर्ध्वमुखैर्दर्भैरक्षवाटः ॥ "ॐफट्वागीश्याः कङ्कणंबध्नामिनमः फट्फट्फट्फट्फट्फट्फट्" इति वागीश्या दर्भपवित्रं दद्यात्। दक्षिणहस्तस्थितं कङ्कणरूपं ध्यायेत् ॥ ततोऽन्यान्संस्कारांस्त्रिभिस्त्रिभिस्तिलाहुतिभिरुत्तानपाणिना कुर्यात् ॥ "ॐजुंरंअग्नेर्गर्भाधानं करोमिस्वाहा ३। ॐजुंरंअग्नेर्गर्भाधानं सम्पद्यतांस्वाहा ३" ॥ "ॐव्योंअग्नेपुमान् भवनमः" इति कुशाग्रेणजलबिन्दुंक्षिपेत्। "ॐव्योंअग्नयेपुंसेनमः" इति पूजनं ॥ ॐजुंअग्नेः पूर्ववक्त्रकल्पनां करोमिस्वाहा ३। एवं सम्पद्यतांस्वाहा ३। ॐहूंअग्नेर्नेत्रत्रयक० ३ एवं ३ ॥ ॐरंअग्नेः सीमांक० ॥ ॐरंअग्नेःसः-शिवतत्त्वमुखं कल्पयामिस्वाहा ३। एवंस-। ॐरंअग्नेःजुंविद्यातत्त्वहृदयं क० ३। ॐरंअग्नेःॐआत्मतत्त्वपादौक० ३ ॥ ॐरंअग्नेःसीमाकल्पनांकरोमि० ३। ॐरंअग्नेः पादौ करोमिस्वाहा ३। ॐरंअग्नेः जंघे करोमिस्वाहा ३ एवं सम्पद्यतां

स्वाहा। ॐरंअग्नेः जानू,ॐरंअग्नेः गुह्यं, कटिं, मेढ्रं, नाभिं, उदरं, हृदयं, हस्तौ, बाहू, स्कन्दौ, ग्रीवां, मुखं, अङ्गप्रत्यङ्गसन्धीः, ॐरंअग्नेः समस्तशरीरं करोमिस्वाहा ३ एवं सम्पद्यतांस्वाहा ३ ॥ ॐरंअग्नेः सीमन्तोन्नयनंकरोमि ३ एवं सम्पद्यतांस्वाहा ३ ॥ ॐफट्अग्निंजीवापयामिस्वाहा ३। ॐअग्नेप्रसवाभिमुखोभवनमः "इति विज्ञप्य" ॥ (वागीश्याऽत्राऽग्निः कृतः) इति विभाव्य। "ॐफट्अग्नयेनमः" इति पूजनम् ॥ ॐहूंअग्नेर्जातकर्मकरोमिस्वाहा ३ एवं सम्प० ३। ॐफट्अग्नेः सूतकशुद्धिर्भवतुफट्स्वाहा ३। ततः कुण्डं अस्त्रार्घ्यपात्राम्भसा प्रोक्षयेत् ॥ ॐफट् अग्निंपरिसमूहामि फट् ३। एवं। ॐफट् पर्युक्षामि फट् ३। परिषिञ्चामिफट् ३॥ ॐफट्यज्ञस्य सन्ततिरसि ॐफट्यज्ञस्यत्वासन्तत्यै आस्तृणामिफट्॥ (पूर्वेत्रयः पुनः पञ्च पञ्चापि च स्तरास्त्रयः। प्रक्षेप्या अस्त्रमन्त्रेण ह्याचार्यैर्यज्ञसिद्धये ॥) ततोहस्तमात्रं ससिधाचतुष्टयं (ॐफट्परिधीन् आस्तृणामिफट्) इति

पूर्वोत्तराग्रान्, पूर्वादिषु संस्थाप्य तदुपरि । "पूर्वे" ब्रह्मणे नमः। "दक्षिणे" रुद्रायनमः। "उत्तरे" सदाशिवायनमः। पश्चिमे" विष्णवेनमः। इति सपुष्पं विष्टरचतुष्टयं दद्यात्॥ ज्वालालिङ्गोपरि पात्रं सविष्टरं संस्थाप्य परमेश्वरं, परितो लोकपालांश्चपूजयेत्॥ ॐजुंसःज्वालालिङ्गस्थायाऽमृतेश्वरभैरवायनमः। ॐजुंसःअमृतलक्ष्म्यैनमः। इति सम्पूज्य, लोकपालान्पूजयेत्॥ लंइन्द्रायवज्रहस्तायनमः, रं अग्नयेश०,टंयमायद० क्षंनैर्ऋतयेख०, वंवरुणायपा०,यंवायवेध्व०, कुंकुबेरायगदाह०, हौंईशानायत्रि०, आंब्रह्मणेप०, ह्लौंअनन्तायहलहस्तायनमः । इतिलोकपालान्सम्पूज्य, लोकपालायुधमुद्राः प्रदर्शयेत्॥ ॐज्योंजुंअग्नेर्निष्क्रमणं करोमिस्वाहा ३ एवंसंपद्यतांस्वाहा। ३॥ ॐज्योंजुंआदित्यदर्शनं क० ३। एवं सं० ३। ततो वागीश्यादक्षहस्तस्थितं कङ्कणं विमुच्य। वागीश्याः कङ्कणमोक्षंकरोमि० ३ एवं० ३॥ सूलेन। "अग्ने शिवाग्निर्भवनमः" इति विज्ञप्य। "ॐजुंसः शिवाग्नयेनमः"।

इति पूजनं। ॐजुंसःअग्नेः शिवाग्निरितिनामकर्म करोमिस्वाहा ३ एवं सम्पद्यतांस्वाहा ३ ॥ ततोध्यानं। रक्तं जटाधरं वह्निं चिन्तयेद्रक्तवाससम्। वामोत्सङ्गगतस्वाहं द्विभुजं रक्तलोचनम् ॥ शुकपृष्ठासनं देवं ज्वालाश्मश्रुविभूषितम् ॥ ईदृशं चिन्तयेद्देवं हव्ये कव्ये च पावकम् ॥ ॐजुंसःशिवाग्नये स्वाहा ३ ॥ ततः पूर्वे। ॐब्रह्मणेनमः इतिसम्पूज्य । तिलेन ॐब्रह्मणेस्वाहा ३ । "ब्रह्मन्! क्षम्यतां" इति विसृज्य, पूर्वविष्टरं मोचयेत्। दक्षिणे । ॐरुद्रायनमः इतिसम्पूज्य । तिलेन। ॐरुद्रायस्वाहा ३ "रुद्र! क्षम्यतां" इति विसृज्य, दक्षिणविष्टरं मोचयेत् ॥ उत्तरे। ॐसदाशिवायनमः इतिपूजा । ॐसदाशिवायस्वाहा ३ "सदाशिव! क्षम्यतां" इति विसृज्योत्तरविष्टरं मोचयेत्। पश्चिमे । ॐविष्णवेनमः इतिपूजा । ॐविष्णवेस्वाहा ३ "विष्णो! क्षम्यतां" इति विसृज्य, पश्चिमविष्टरं मोचयेत् ॥ ततः । ॐवागीश्वर्यैनमः इति पूजा । ॐह्रांवागीश्वर्यैस्वाहा ३ "सुषिरित्रिनिलये दक्षे भोगमोक्षप्रदे

शिवे । वागीश्वरि नमस्तेऽस्तु गच्छ देवि स्वविष्टपम्" इति विसृज्य । पुनः, लालानिवारणार्थं हस्तप्रमाणचतुर्विंशतीध्मा-होमः (२४ चौवीस समिद्धोंका होम करना)॥ ॐजुंसःशिवा-ग्नितर्पयामिस्वाहा २४ ॥ ॥ (अथस्रुक्स्रुवसंस्कारः ॥) ॐ-फट्तापनं करोमिफट् इत्यग्नौतापनं ॥ फट्प्रोक्षणं करोमिफट् इतिशिवाम्भसा प्रोक्षणम् । ॐहूंअवगुण्ठयामिहूं इतिलिङ्ग-मुद्रयाऽवगुण्ठनं ॥ पुनरग्नौ त्रिर्भ्रामणं अस्त्राम्भसा प्रोक्षणम् । दर्भाग्रेण तदग्रस्पर्शः । पुनः प्रोक्षणमग्नौ त्रिर्भ्रामणं । दर्भ-मध्येनतन्मध्यस्पर्शः । प्रोक्षणं त्रिर्भ्रामणं । दर्भमूलेन तन्मू-लस्पर्शः । प्रोक्षणं त्रिर्भ्रामणं ॥ "ततः स्ववामेदर्भपृष्ठे स्रुक्स्रुवा-वऽधोमुखौ संस्थाप्य" ॥ ॐशिवशक्तिभ्यांनमः" इतिपूजा । गन्धादि । "ऊर्ध्वमुखौकृत्वा" ॐशिवायनमः, ॐशक्तये नमः ॥ ॥ ( अथाज्यसंस्कारः ॥ ) आज्यस्याधिश्रयणं, प्रस्रुतस्य संप्रोक्षितपात्रे स्थापनं "ॐहःफट्प्रोक्षणंकरो-मिफट्" इत्यस्त्रेण प्रोक्षणं "ॐफट्तापनंकरोमिफट्" "ॐ-

हूंअवगुण्ठयामिहूं" इत्यवगुण्ठनं । "ॐहैं उद्वासनं करोमिहैं" इत्याग्नेयेदिशि ऊर्ध्वेधारणं दीप्तिस्फुटार्थं । "ॐहः फट् भ्रामयामिफट्" इतिकुण्डस्य परितोऽस्त्रेण त्रिर्भ्रामणम् । योनौ स्थापनं ॥ ततः प्रादेशमात्रं दर्भद्वयं नागपाशाकारं करद्वयाऽनामिकाऽङ्गुष्ठाभ्यामाऽदायाऽज्यस्य त्रिवारं पराङ्मुखानयनं(उत्प्रवणं) त्रिवारं प्राङ्मुखानयनं (संप्लावनं) च समलभागाऽपनयनाय, सारभागाऽहरणायच, मूलेन कुर्यात् ॥ ॐहःफट्संप्लवनं करोमिफट्" तदनु दर्भोल्मुकं प्रज्वाल्याऽज्यपात्रमध्ये क्षिपेत् । मूलेन "ॐआज्ये प्रोक्षणं करोमिनमः" इति स्वनेत्रतेजोनिरीक्षणेन परतेजोमयमाज्यं कुर्यात् ॥ ( इत्यवद्योतनानामसंस्कारः ॥ ) पुनर्ज्वलद्दर्भोल्मुकेन सर्वतो भ्रामितेन नीराजनं ॥ तदेव ज्वलदुल्मुकं "ॐहूंपर्यग्निकरणं करोमिनमः" इत्यग्नौक्षिपेत् ॥ "ॐहःफट्प्रोक्षणं करोमिफट्" इति शिवाम्भसाप्रोक्षणं । मूलाङ्गैरभिमन्त्र्याऽमृतमुद्रयाऽमृतीकृत्यैवं द्वादशसंस्कारान्कृत्वाऽऽज्यं मूलेनार्चयेत् ॥ ( इत्याऽज्यसंस्काराः ) ॥ लंसद्योजातवक्त्रे-

णाऽघोरवक्त्रमऽनुसन्दधेस्वाहा ३ यंतत्पुरुषवक्त्रेणक्षंईशा-
नवक्त्रमऽनुसन्दधेस्वाहा ३ इति जुहुयात् ॥ ततः; ॐहूँनाडि-
त्रयकल्पनांकरोमिनमः" इत्याज्यपात्रे पूर्वाग्रं दर्भद्वयं स्थाप-
यित्वा भागत्रयेण नाडित्रयं ध्यायेत् ॥ तत्र मध्ये । ॐहां-
इच्छाशक्तयेनमः, ॐजुंवह्निधाम्नेसुषुम्णायैनमः । वामे ।
ॐह्रींक्रियाशक्तयेनमः, ॐसः सोमधाम्नेइडायैनमः । दक्षे ।
ॐहूंज्ञानशक्तयेनमः, ॐॐसूर्यधाम्नेपिङ्गलायैनमः ॥ ॥
अथाग्नेः ॥ ॐशिवाग्नेर्भागत्रयकल्पनां करोमिनमः" इत्यू-
र्ध्वमुखं प्रादेशमात्रं ससिद्धाद्वयं दत्त्वा भागत्रयेण नाडित्रयं
ध्यायेत् ॥ स्ववामेवह्निदक्षेपूजनं । ॐॐपिङ्गलाश्रयायसूर्या-
यनमः ॥ मध्ये । ॐजुंसुषुम्णाश्रयायाग्नयेनमः ॥ स्वदक्षे
वह्निवामे । ॐसः इडाश्रयायसोमायनमः । इति संपूज्य ।
"ॐजुंसः अग्नयेस्वाहा" इत्याज्यदक्षभागाद्वह्निदक्षभागे । "ॐ-
जुंसः सोमायस्वाहा" । इत्याज्यवामभागाद्वह्निवामभागे ।
"ॐजुंसः अग्नीषोमाभ्यांस्वाहा" इत्याज्यमध्यभागाद्वह्निमध्य-

भागे जुहुयात् । इति शुक्लपक्षे ॥ (अथकृष्णपक्षे) ॥ "ॐजुंसः अग्नयेस्वाहा" इत्याज्यदक्षभागाद्वह्निदक्षभागे । "ॐजुंसः सूर्यायस्वाहा" इत्याज्यवामभागाद्वह्निवामभागे । "ॐजुंसः अग्निसूर्याभ्यांस्वाहा"। इत्याज्यमध्यभागाद्वह्निमध्यभागे हुनेत्॥ ( इति चक्षुषीहोमः ) ॥ ॐजुंसः शिवाग्नेः प्राशनं करोमिस्वाहा ३ एवं सम्पद्यतांस्वाहा ३ ॥ ( अथाज्यदर्शनम् ॥ ) आज्यं तेजः समुद्दिष्टमाऽज्यं पापहरं परम् । आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः ॥ दिव्यन्तरिक्षभौमादेर्यत्ते किल्बिषमागतम् । तत्सर्वमाज्यसंस्पर्शाद्विनाशमुपगच्छतु ॥ आत्मनोवाङ्० पितुर्वा मातुः परलोके शिवपदवीप्राप्त्यर्थं शिवाग्नाविदमाज्यमर्पयामिनमः ॥ आदौ पूर्णा ॥ अग्निंज्वालामयं देवं भूषयन्तमनेकशः । ज्वालाभिर्मण्डिताकाशं साक्षमालाकमण्डलुम् ॥ वरदाभयहस्तं च पुष्पवर्णं हुताशनम् । शुकपृष्ठासनं देवं शक्तिहस्तं चतुर्भुजम् ॥ मृगाजिनेन सन्नद्धं

यजमानवरप्रदम् । त्रिनेत्रं पञ्चवक्त्रं च होमकाले च चिन्तयेत् ॥ एवं ध्यात्वा भगवन्तं सर्वसिद्धिप्रदायकम् ॥ ॐजुंसः शिवाग्नेश्चूडाद्याः संस्कारा बाल्यादिसंस्थिताः प्राशनान्ताश्च सर्वे "पूर्णाहुत्या" सम्पूर्णाः सन्तु वौषट् ॥ ॥ अथ चरुसंस्काराः ॥ ॥ स्ववामे कुण्डसमीपे पूर्वाग्रान्दर्भानास्तीर्य "स्वाधारशक्त्यैनमः" इति संपूज्य, तत्र पुरोडाशादिकं चरुं संस्थाप्य, मूलेन साङ्गेन सम्पूज्याऽमृतीकृत्य दर्भकाण्डं प्रज्वाल्य, "फट् नीराजनां करोमिफट्" विद्याम्भसाऽभ्युक्ष्याऽस्त्रेण सविष्टरं मेक्षणमग्रतः स्थापयेत् । "ॐजुंसः सम्पातं करोमि"स्वा" इत्यऽग्नौ "हा" इति चरौ ३॥ ॐजुंसः सुतप्तोभव"स्वा" इत्यग्नौ "हा" इति चरौ ३ अग्नावधिश्रित्य ॐजुंसः स्वशीतोभव"स्वा" इतिचरौ "हा" इत्यग्नौ । ३ ॥ ॐहः फट्चरुमाच्छादयामिनमः "इतिदर्भैराच्छादनं" । ॐहुंचरुंसंरक्षयामिनमः "इतिपुष्पं" ॥ (ततोनवजिह्वा ज्वालालिङ्गोपरिपूजयेत् ) ॐप्रभायैनमः, दीप्त्यै, प्रकाशायै,

अर्चायै, मरीच्यै, स्थापिन्यै, रुच्यै, करालायै, लेलिहायैनमः ॥ "कुण्डमध्ये नवजिह्वाः पूर्वादितः" ॥ पूर्वे । ॐराज्यार्थायैनमः, दाहजनन्यै, मृत्युदायै, शत्रुहारिण्यै, वशीकर्त्र्यै, उच्चाटिन्यै, अर्थदायै, मुक्तिदायै, "मध्ये" ॐसर्वसिद्धिप्रदायैनमः "इतिसम्पूज्य । स्वाहान्तेन होमयेत् । यथा" ॐप्रभायैस्वाहा, १८ । पूर्णा । द्वारेशा (पृ० ३००) । ॐजुंसः शिवाग्नेर्जिह्वाः कल्पयामिस्वाहावौषट् ॥ द्वितीयापूर्णा । ॐजुंसःशिवाग्नेर्जिह्वासन्निधिरस्तुस्वाहावौषट् ॥ ततश्चरोः किञ्चिद्भागेन नैवेद्यं कृत्वाऽन्यभागं सघृतस्रुवेण यथाशक्ति देवेषु होमयेत् । ॐजुंसः अमृतेश्वरभैरवायस्वाहा ८ ॐजुंसः अमृतलक्ष्म्यैस्वाहा ८ । ॐहृदयायस्वाहा, जुंशिरसेस्वाहा, सः शिखायै, ॐकवचायहुंस्वाहा, जुंनेत्राभ्यां, सःअस्त्रायफट्स्वाहा ॥ ॐअघोरभट्टारकायस्वाहा ३ अघोरेश्वर्यै स्वाहा ३ निष्कलाय स्वाहा ३ लंसद्योजातवक्त्रायस्वाहा, वंवामदेव०, रंअघोरव०, यंतत्पुरुष०, शंईशानवक्त्रायस्वाहा । ह्रींचण्डीकापा

लिन्यैस्वाहा ३ ॐआनन्देश्वरभैरवायस्वाहा सुरादेव्यैस्वाह
"ततः पापभक्षणार्थं मातापित्रोश्चतुर्दशाऽहुतीः पितृणामाहुतित्रयं त्रयं दद्यात्। यथा" ॐहूंहांहींहूंहैंहौंहः पितुरमुकस्य शिवगोत्रस्येश्वरस्य उद्धारं करोमिस्वाहा १४ एवं, पितामहस्य ३ प्रपितामहस्य ३ ॥ इत्थमेव, मातुःशिवगोत्रायारुद्राण्या बलविक्रमण्या उद्धरणं करोमिस्वाहा १४ पितामह्याः ३ ३ प्रपितामह्याः ३ दत्त्वा ॥ ( द्वात्रिंशदक्षरोऽघोरो व्योमव्यापी दशाक्षरः । नवात्मा बहुरूपश्च पापहर्ता प्रकीर्तितः ) अंअघोरभट्टारकायस्वाहा ३ ॐआईऊंव्योमव्यापिणेफट्स्वाहा ३ ॐबहुरूपभैरवायस्वाहा ३ ॐभूःस्वाहा, ॐभुवः, ॐस्वः, ॐमहः, ॐजनः, ॐतपः, ॐसत्यंस्वाहा । ततो ये देवाः पूजितास्तेषामऽपि एकैकाहुतिर्देया। सप्तावरणदेवताभ्यः स्वाहा ॥ ॥ "ततो गुरुशिवपूजनम्" गुरवेशिवाय गन्धादि । अपसव्येन । पितुः शिवगोत्रस्य वा मातुः शिवगोत्रायाः परलोके पुण्यवृद्ध्यर्थं शिवाष्टकपीत्या तिलाम्भसा पुण्यवृ-

द्धिरस्तु शिवाष्टकादेवताः प्रीताः सन्तु ॥ मध्यप्राणेति (पृ० २५६–१३) ॐहूंभैरवाप्यायनमस्तुस्वाहावौषट् अग्निसन्निधिरस्तु ॥ पूर्णामत्र न दद्यात् ॥ श्राद्धं यथावद्ब्राह्मणभोजनपिण्डदानादियुतं सम्पाद्य पूर्णां यथा ॥ हारमनोहरवक्षसमायतचक्षुषमहीशकृतभूषम् । पञ्चवदनं सितरुचिरुचिरं शशिखण्डमण्डितशिखण्डम् ॥ उद्यमनपाशविशिखामनवरखट्वाङ्गवल्लकीघण्टाः । दण्डद्रुघनाभ्यां सह वहन्तमिव वामबाहुनवकेन ॥ खड्गाङ्कुशविशिखाऽभयकपालडमरुत्रिशूलपविपरशून् । दक्षैर्दोभिर्नवभिः कलयन्तं चिन्तयेच्च भगवन्तम् ॥ सितमुपरितनवदनं पुरतः पीतं च मेचकं दक्षं वाममरुणं च । सितरुचिरुचिरं देवस्य पश्चिमं विचिन्तयेत् ॥ एवमुद्भासिताशेषभगवद्देशशालिनीम् । चिन्तयेदस्य चोत्सङ्गगामघोरीश्वरीमपि ॥ ध्यात्वा ॐजुंसः पितुः वा मातुः परातृप्तिः न्यूनाधिकाऽन्यथाकृतकर्मप्रायश्चित्तनिवृत्तिपूर्णं चास्तु श्रौषट्स्वाहा "इतिपूर्णा"

गुह्याति० इतितर्पणं। ततो भस्मतिलकं। शिवमस्तु यजमानस्य च्छिद्रं माभूत्कदाचन। देवदेव्याः प्रसादेन रक्षरक्षाऽस्तु मे भृशम् ॥ ॥ अग्निरितिभस्म, वायुरिति भस्म, व्योमेतिभस्म, स्थलमितिभस्म, जलमितिभस्म, सर्वँहवाइदं भस्म, एतानि चक्षूंषि भस्मानि, अग्निरिति भस्मना ललाटमऽनुलिप्य" ॥ पशुपाशविमुक्तोभवति सर्वतीर्थस्नानफलं प्राप्नोति सर्वकर्माऽच्छिद्रं भवति ॥ ततःशाक्तिककुशजलेन स्रुचा चतुर्दिक्षु धारापातं कुर्यात् ॥ ॐफट्शिवाग्निं विसृजामिफट् इतित्रिः ॥ ततोऽग्नौक्षमापुष्पाणि ॥ "धर्मं देहि धनं देही" त्यादि ॥ तर्पितोऽसि विभो भक्त्या होमेनाऽनलमध्यतः। होमद्रव्येषु यत्पुण्यं तत्सर्वमात्मसात्कुरु ॥ संसारेऽस्मिन्विभो मोहात्प्रायश्चित्तं तु यद्गतम्। तत्सर्वं नाशमायातु होमादऽस्मान्महेश्वर ॥ क्षमस्व मन्त्रनाथाय नित्यानन्दधराय च। धर्मार्थकाममोक्षाय पुनरागमनाय च ॥ "इति बाह्याग्नितेजः स्वात्माग्नौ स्थापयेत् ॥" इति शिवाष्टकाविधिः ॥

## अथ शिवान्वष्टकाविधिः ( शाक्तंश्राद्धं ) ॥

आदौ दीपाग्रे वृत्तत्रये व्योम त्रयं शालिचूर्णेन लिखित्वा शिष्यं प्राणायामं कारयेत्। शोषणादीनि च,ततो मूलाधारादुत्थितां सूक्ष्मनादमयीं वह्निशिखांकल्पां सुषुम्णापथा ब्रह्मरन्ध्रं प्रापय्य द्वादशान्तःस्थद्रवत्सम्पूर्णचन्द्रात्पतंतीं, तेनैव मार्गेण स्वधावृष्टिंस्कन्दस्थाने स्वपितरमाऽप्यायन्तीं ध्यात्वा, ततोहृदि स्वधार्णवोपरि रक्तपुष्पोपविष्टां त्रिनेत्रामेकवक्त्रां खट्वाङ्गकाद्यडमरून्सव्यैर्भुजैर्वामैः च्छुरिकासिमुण्डानि बिभ्रतीं प्रेतारूढां रक्तां चण्डीं सञ्चिन्त्य मानसैः पञ्चोपचारैः सम्पूज्य, आनन्दपात्रे "ॐह्रींचण्डिकामालिनिस्वाहा" इति सम्पूज्य, यमान्तकायैविकालरात्र्यैधी० तन्नोचण्डीप्र० ३ ॥ पराशक्तिकदीक्षाफलप्राप्त्यर्थं तेजोमयेतापत्रये अमुकस्य शाक्तं श्राद्धमहं करिष्ये। इतिसङ्कल्प्य। व्योमत्रये न्यसेत्। व्योमत्रयस्य कर्षूत्रयसंज्ञा। "कर्षन्ति विश्व"मिति कर्षाइतिवचनात्। कर्षूषु दक्षिणाग्रान्दर्भानास्तीर्य तत्र, आधारशक्त्यैस्वधानमः, वामायै, ज्येष्ठायै, ॐरौद्र्यै-

स्वधानमः । पात्रमध्ये । भद्रकाल्यैस्वधानमः ।। इतिकर्षत्रय-पूजनम् ।। ततश्चरुं शाक्तं बलवीर्यं परिकल्प्य । "सः सः अन्नाय शक्तबलायनमः" इति चरुं सम्पूज्य । "अन्नतिलमध्वाऽज्य-पयोभि"रित्यादि, "अग्निष्वात्तेभ्योवि-वर्हिषद्भ्योधी-तन्नः सोमः प्र-। २ । यमान्तकायेवि० ३ "पिण्डवर्तनमन्त्रः" । (ह्रींचण्डीकापालिनिस्वाहा हूंभगवति नरकार्णवशोषणि स-द्योजातभैरव समयं पूरय २ परज्योतिर्विलीनस्याऽ"मुकस्य" पितुः शिवगोत्रस्य रुद्रस्य पिण्डमुत्पादयामिस्वाहा ) अद्यता-वत् । पितुः रुद्रस्य इच्छाशक्तिगर्भः शाक्तोऽयं पिण्डः स्वधा-नमः २ "इत्येकंपिण्डं दद्यात्" ।। "अन्नतिले" त्यादि,अग्निष्वा-त्तेभ्यो(ह्रींचण्डी-पिण्डमुत्पादयामिस्वाहा) अद्यतावत् पितुः रुद्रस्य ज्ञानशक्तिगर्भः शाक्तोऽयं पिण्डः स्वधानमः । २ । "अन्नतिले"त्यादि । अग्निष्वात्तेभ्यो-( ह्रींचण्डीका-उत्पा-दयामिस्वाहा ) अद्यतावत् पितुः रुद्रस्य क्रियाशक्तिगर्भः शाक्तोऽयं पिण्डः स्वधानमः, इतितृतीयं पिण्डं दद्यात् ।

वासांसि स्वधानमः । वीरान्नं स्वधानमः । लेपं निवार्य । पित्रे रुद्राय शाक्तेश्राद्धे गन्धार्घपुष्पधूपदीपभक्ष्यभोज्य-तिलमधुहिमपानादिस्वधानमः ॥ ततोविशेषपूजा ॥ ॐह्रीं-चण्डिकापालिनिस्वाहा मत्पितरं अमुकं भैरवगोत्रं रुद्रं नित्यतृप्तं नित्यानन्दमयं सम्पादय २ स्वाहा ॥ १ ॥ ॐह्रींचण्डिकापालिनिस्वाहा मत्पित्रे पादसरोजमूलेस्थितिं प्रयच्छ २ स्वज्ञानविभागं सन्दर्शय २ समीपतां कुरु २ अमेये मायामये परापरविभागेस्वाहा ॥ २ ॥ ॐह्रींचण्डि-कापालिनिस्वाहा मत्पिता भैरवगोत्रो रुद्रो देवीधाम्नि ज-यतुस्वाहा ॥३॥ इतिसम्पूज्य ॥ ततो दीपपूजा ॥ ॐहसरक्षम-लवऊं-उच्चण्डभास्करायस्वधानमः, ह्रींश्रींहंप्रभायै,[1] । ॐवं ह्रींश्रींहंप्रतापिन्यै,[2] ह्रींश्रींहंपिङ्गलायै,[3] ३ँतमोहारिण्यै,[4] ३ँचण्डायै[5] ३ँभास्वरायै,[6] ३ँज्येष्ठायै,[7] ३ँअरुणायै,[8] ३ँवि-श्वबोधिन्यै,[9] ३ँरसापहारिण्यै,[10] ३ँतुष्टायै,[11] ३ँमनोन्मन्यै-स्वधानमः[12] (एता द्वादशमासेषु पूज्या दीपे विधानतः ॥)

ततोऽग्नौ । ॐह्रीश्रींआंदीप्तायैनमः,[१] । इँआंदहन्यै,[२] इँइं-घोषायै,[३] इँईंकरालायै,[३] इँउंघोरविक्रमायै,[५] इँऊंरौद्र्यै,[६] इँएंलेलिहानायै,[७] इँऐंविद्युतायै,[८] इँॐरसभक्षिण्यै,[९] ॐऔंमहोच्छुष्मायै, इत्यग्निं सम्पूज्य । ततःपात्रे । हस्रींसः सोमायनमः ॥ ह्रींश्रींसं अमृतायैनमः,[१] इँह्लादिन्यै,[२] इँज्योत्स्नायै,[३] इँस्यन्दिन्यै,[४] इँसुमनायै,[५] इँउषायै,[६] इँमनोन्मनायै,[७] इँमालिन्यै,[८] इँविमलायै,[९] इँवामायै,[१०] इँमहानन्दायै,[११] इँगोमायै,[१२] इँभद्रकाल्यै,[१३] इँरोहिण्यै,[१४] इँव्यापिन्यै,[१५] इँरसवर्षिण्यैनमः[१६] ॥ इतिपात्रे सम्पूज्य, शेषमन्नं पात्रे संस्थाप्य वामावर्तेनारार्तिकां कुर्यात् ॥ (पाताले चान्तरिक्षे च मध्ये वा भुवनत्रये । येकेचित्पितरः सर्वे तृप्यन्तु चरुपानकैः ) इति । ततः त्रयीसप्तचतुर्युग्ममयीति पिण्डविसर्जनम् ॥ ततोऽग्निं विमुच्य । धर्मं देहि । आह्वानं । "सभार्यस्त्रिजगन्नाथ" ॥ ( पृ० ३३६ ) इत्युन्नपूरपुष्पाणि

इतिमासानुमासिकश्राद्धविधावन्वष्टका समाप्ता ॥

## अथ सांवत्सरिकशिवश्राद्धविधिः

ॐकृतशिवाऽन्नपूर्यऽर्चनः ॥ सव्येनाऽचम्य ॥ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम् । स्वान्पितॄन्मनसा ध्यात्वा पश्चाच्छ्राद्धं समारभेत् ॥ श्राद्धे योगेश्वरं देवं मार्तण्डं ग्रहनायकम् । स्वान्पितॄन्मनसा ध्यात्वा शैवं श्राद्धं समारभेत् ॥ वामस्कन्धे द्दष्टिं निधाय ॥ ॐगायत्र्यैनमः । ॐभूर्भुवः स्वस्त० ३ तन्महेशायविद्महे वाग्विशुद्धाय धीमहि । तन्नः शिवः प्रचोदयात् ३ ॥ "अपसव्येन" ॥ अग्निष्वात्तेभ्यो विद्महे बर्हिषद्भ्यो धीमहि । तन्नः सोमः प्रचोदयात् ३ ॥ अद्यतावत्० पितुःशिवगोत्रस्य ईश्वरस्य, पितामहस्य शिवगोत्रस्य सदाशिवस्य,प्रपितामहस्य शिवगोत्रस्य शिवस्य, "वा" मातुः शिवगोत्रायाबलविकारिण्याः, पितामह्याः शिवगोत्रायाबलप्रमथिन्याः, प्रपितामह्याः शिवगोत्रायाः सर्वभूतदमन्याः सांवत्सरिकं शिवश्राद्धं सदैवकं सान्नपूरपूजनं गुरुशिवपूजनमर्चामहं करिष्ये ॐकु-

रुष्व ॥ "अग्निं परिसमूह्य" ॥ तिलान्विकीर्य ॥ निहन्मि सर्वं यदऽमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया । रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥ (फट्श्राद्धविघ्नान् यातुधानान्निहन्मिफट् ) ॥ सव्येन ॥ विश्वेषान्देवानां रुद्राऽनन्तयोरिदमासनं नमः । विश्वेभ्योदेवेभ्यः रुद्रानन्ताभ्यां गुरुं त्वां पूजयामि ॐपूजय विश्वान् देवान् रुद्रानन्तौ आवाहयिष्यामि ॐआवाहय ॥ यवान्विकीर्य । आगच्छन्तु महाभागाविश्वेदेवा वरप्रदाः । ये येऽत्र विहिताश्राद्धे सावधाना भवन्तु ते ॥ शन्नोदेवी ॥ "अस्त्रमन्त्रेण" । फट्अस्त्रायफट् ॥ लाजाश्च ॥ विश्वेभ्योदेवेभ्यः रुद्राऽनन्ताभ्यां पाद्यंनमः । शेषंनिवार्य । पुनः । फट्अस्त्रायफट् ॥ आपः क्षीरं ॥ स्वांस्वांसोमायस्वाहा "इति-[२]जलं" । ॐहूंवागीश्वरि वाक्प्रदेसरस्वत्यैनमः "इतिक्षीरं"। ॐज्रींसावित्रि पापभक्षिणि सावित्र्यैनमः "इतिकुशाग्रं"[३] । लंपृथिव्यै धरित्रिशक्तयेनमः "इतितण्डुलान्"[४] । ॐत्रिज-

टोर्ध्वपिङ्गलायरुद्रायनमः "इतिसर्षपान्" । ॐब्रह्मणेज्ये-
ष्ठायस्वाहा "इतियवान्" । ॐतत्सदोंपितृभ्योनम "इति
तिलान्" । ॐविष्णवेसुरपतयेमहाबलायनमः "इतिपुष्पं"
इत्यष्टाङ्गेन पूरयेत् ॥ भगवन्तौ अर्घ्यम् २ । विश्वेदेवाः रुद्रा-
नन्तौ इदंवामर्घ्यंनमः । विश्वेभ्योदेवेभ्यः रुद्रानन्ताभ्यां स-
मालभनं गन्धोनमः, अर्घोनमः पुष्पंनमः, धूपोनमः दी-
पोनमः, वासोनमः । विश्वेषांदेवानां रुद्रानन्तयोः अर्घ्य-
दानाद्यऽर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ ॥ ॐमास-
श्चर्षणीधृतो विश्वेदेवास आगत । दाश्वांसो दाशुषः सुत-
म् ॥ उपयाम गृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः । एष
ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ विश्वेदेवास आगत शृणु-
ताम हमं हवम् । इदं बर्हिर्निषीदत ॥ "अपः प्रदायापसव्यं
कृत्वा" । पितुः शिवगोत्रस्य ईश्वरस्य इदमाऽसनंस्वधानमः ॥
पित्रे शिवगोत्राय ईश्वराय–गुरुं त्वां पूजयामि ॐपूजय
पितृनावाहयिष्यामि ॐमावाहय । "तिलान्विकीर्य" ॥

श्राद्धाऽनुवाकौ तूखानामाऽर्षम् ॥ अपयन्त्वऽसुराः पितृरूपा ये रूपाणि प्रतिमुच्याऽचरन्ति परापरोनिपुरो ये हरन्ति । अग्निष्टांल्लोकान्प्रणुदत्त्वऽस्मान् । अपेतो यन्त्वऽसुरा ये पितृषदः उदीरतामऽवरा उत्पराप्त उन्मध्यमाः पितरः सोम्यासः असुं यय ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हव्येषु ॥ एत पितरो मनोजवैरागच्छन्त पितरो मनोजवैः । ये निखाता ये परोप्ता गर्भाद्येऽवपेदिरे सर्वांस्तानऽग्न आवह पितॄन्हविषे अत्तवे । आगच्छन्तु पितरो मनोजवसः पितरः पितरः शुन्धध्वम् । आ मे यन्तु पितरो भागधेयं विराजा हूताः सलिलात्समुद्रात् । अस्मिन्यज्ञे सर्वकामांल्लभन्तामऽक्षीयमाणानुपजीवत्वेतान् ॥ अन्तर्दधे पर्वतैरऽन्तर्मह्या पृथिव्या दिवा दिग्भिरऽनन्ताभिरन्तरन्यान्पितॄन्दधे ॥ अन्तर्दधे ऋतुभिरहोरात्रैः ससन्धिकैरर्धमासैश्च मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य कुक्षिभिश्चान्तरन्यान्पितॄन्दधे ॥ ॥ यास्तिष्ठन्तीतित्रिष्टुप् ॥ या-

स्तिष्ठन्ति या धावन्ति या अद्ध्रुग्ध्राः परिस्रुस्रुषीः। अद्भि-विंश्वस्य धर्त्रीभिश्चान्तरन्यान्पितॄन्दधे ॥ अमृता वागमृता आपोऽग्निर्वाचोऽमृतं तन्त्रिवृद्देकधाम ताभिर्मत्प्रत्ताभिः स्व-धया मदध्वमिहास्मभ्यं वसीयोऽस्तु देवाः । यन्मे माता प्रलुलोभ यश्चचाराऽननुव्रतं तन्मे रेतः पिता वृङ्क्तां मा भूरऽन्योऽवपद्यताम् ॥ १ ॥ यास्तिष्ठन्ति-यन्मे पितामही-पितामहो वृङ्क्तां ॥ २ ॥ यास्तिष्ठन्ति-यन्मे प्रपितामही-प्रपि-तामहोवृङ्क्तां ॥ ३ ॥ "फट्अस्त्रायफट्" ॥ लाजाश्च । भग-वन्तः पाद्यं २ पित्रे शिव-पाद्यंस्वधानमः । "सव्येन" ॥ आचम्य । अपसव्येन । यास्तिष्ठन्तीति षट् ॥ यास्तिष्ठन्ति-यन्मे माता ॥ या-यन्मे माता । या-यन्मे पितामही ॥ या-यन्मे माता । या-यन्मे पितामही । या-यन्मे प्रपितामही ॥ "फट् अस्त्रायफट्" ॥ आपः क्षीरं । स्वांस्वांसोमायेत्याद्यऽष्टा-ङ्गेन पूरयेत् ॥ भगवन्तोऽर्घ्यं २ ॥ पितः शिवगोत्र ईश्वर इदं वः अर्घ्यं स्वधानमः । पित्रे शिवगोत्राय ईश्वराय समा

लभनं गन्धःस्वधानमः ॥ "सव्येन" ॥ आचम्य "अपसव्येन" ॥ पित्रे अर्घः-पुष्पं-धूपः-दीपः-वासांसिस्वधानमः। क्षंईशानवक्त्रायनमः, यंतत्पुरुषव,-रंअघोर-, वंवामदेव,-लंसद्योजातवक्त्रायनमः,। सर्वज्ञताहृद-तृप्तिशिर-अनादिबोधशिखा-स्वतन्त्रकवचा-अलुप्तशक्तयेनेत्रा-अनन्तशक्तयेअस्त्रायफट् । (दक्षिणाग्रान्दर्भानास्तीर्य) "सव्येन"। शुन्धन्तां लोकाः। "अपसव्येन" पितृषदनः पितृषदनमसि पितृभ्यः स्थानमसि, पितृभ्यः गन्धःस्वधा, अर्घःस्वधा, पुष्पंस्वधा, पितृभ्य आच्छादनं वासांसिस्वधा, पितुः शिवगोत्रस्य ईश्वरस्य अर्घ्यदानाद्यऽर्चन० ॥ आदित्या रुद्रा वसवो मे सदस्यास्तेषां सख्ये स्वधया मदध्वं स्वधां वहध्वमऽमृतस्य योनिं याऽत्र स्वधा पितरस्तां भजध्वम् ॥ "सव्येन" । इदमऽन्नमिदं देवेभ्यः रुद्राऽनन्ताभ्यां श्रृतं चरुमभिघार्य । "अपसव्येन" । इदमन्नमिदं पितृभ्यः श्रृतं चरुमऽभिघार्य । प्रक्षाल्य तुण्डलान्पवित्रान्तर्हितानाऽन्नपति प्रक्षाल्य मूलतो मेक्षणमवदधाति । अग्रा-

वधिश्रित्य तत्रचाऽभिघार्य दक्षिणत उद्वास्य पुनश्चाभि-घार्य । पित्रे दक्षिणपश्चिमाग्रैस्तरैः "पुरस्तात्" इत्यास्तीर्य । श्रियै सोमवत्यै अन्नपूर्णाभगवत्यै गन्धादि ॥ श्रियन्देवीं० ॥ अग्नौ करवाणि ॐकुरु । सोमाय पितृमतेस्वधानमः । अग्नये आङ्गिरसे शिवाग्नयेस्वधानमः । "तूष्णींपात्रेषु निक्षि-पेत्" । इत्यग्नौ हुत्वा, ये मामकाः पितरः पार्थिवासो येऽन्त-रिक्षे ये दिवि ये समुद्रे ये वाचमाश्वा अमृता बभूवुस्तेऽ-स्मिन्यज्ञे सर्वकामांल्लभन्ताम् ॥ एतद्वः पितरो भागधेयं पात्रेषु दत्तममृतं स्वधावत् । अक्षीयमाणमुपजीवत्वेनं मया प्रत्तं स्वधया मदध्वम् ॥ अयं यज्ञः परमो यः पितॄणां पात्रेषु देयं हविरग्यमग्नेः । मनश्च वाक्च पितरो वः प्रदा-नैरश्विभ्यां प्रत्तं स्वधया मदध्वम् ॥ एषा व ऊर्गेषा वः स्वधा तामऽत्त च पिवत च मा च वः क्षेष्ठ येह पितर ऊर्ग्देवतासु तस्यै वयं ज्योग्जीवन्तो भूयास्म । आ मासुपक्रमऽमृतं निविष्टं मया प्रत्तं स्वधया मदध्वम् ।

क्षीरंघृतंवाऽसिच्य ॥ ॐह्रींश्रींपापान्तकारिणि पापं मोचय २ पापंहन २ पापंदह २ माये मा चलरूपिणिविच्चेह्रींस्वाहा ॐह्रींश्रींह्रींसः क्षीरंघृतंवाऽसिच्य ॥ "सव्येन"। वैश्वदेवहविषि पिन्वमानं विश्वेषु भूतेषुपृथग्निविष्टं क्षीरं घृतंवाऽसिच्य ॥ रुद्रानन्ताभ्यां क्षीरं-घृतंवाऽसिच्य ॥ विश्वेभ्योदेवेभ्योरुद्रानन्ताभ्योऽन्नंनमः २ अन्नं मधुमधु पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ऊर्गऽस्योर्जोदा ऊर्जंमेदेहिऊर्जंमयिधेहि, अन्नंमेदेहिअन्नंमयिधेहि अक्षतिरसि मा मेक्षेष्ठाऽमुत्राऽस्मिंल्लोक इह च ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे[1]। त्रीणि पदा[2]-। अतो धर्माणि[3]-। तद्विष्णोः[4]-। तद्विप्रासो-। विष्णो इदं रक्षस्व । पृथिव्यैनमःविष्णवेनमः "हसरक्षमलवयऊं रुद्रानन्त इदंरक्षस्व । विश्वेभ्योदेवेभ्यः रुद्रानन्ताभ्यां यथोपस्थितं दत्तंदास्यमानेनसह सव्यञ्जनमऽमृतमऽन्नंनमः।

नमोदेवेभ्यः । "अपसव्येन" ॥ पित्रे शिवगोत्राय-इत्यादि संवत्सरिके शिवश्राद्धे अन्नंस्वधानमः ३ । पिता-महायाऽन्नंस्वधानमः ३ । प्रपितामहायाऽन्नंस्वधानमः ३ ॥ अन्नं मधुमधु-। पृथिव्यैनमः विष्णवेनमः हसरक्षमलव-यऊं ईश्वरसदाशिवशिव इदं रक्षस्व ॥ पित्रे शिव-यथोप-स्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नं स्वधा-नमः स्वधापितृभ्यः ॥ पयःपृथिव्यां[1]-। दधि क्राव्णो[2]-। घृत-वती[3]-। मधुवाता[4]-। शर्कराभि[5]-। पञ्चव्युष्टी[6]-। पुरुषसूक्तादि पठित्वा ॥ "सव्येन" ॥ अद्यदिनेऽद्ययथा-॥ शन्नोदेवी । फट् अस्त्रायफट् ॥ विश्वेभ्योदेवेभ्योरुद्रानन्ताभ्यामपोशा-नंनमः ॥ "अपसव्येन" ॥ यास्तिष्ठन्ति-। फट्अस्त्रायफट् । पित्रे शिव-सां-शिवश्रा-अपोशानंस्वधा ॥ ( तिलमन्नं च पानीयं सकुशं तेषु चाग्रतः । विकिरेत्पितृभूतेभ्यो जपन्नपहता इति ) अपहता असुरा रक्षांसि पिशाचाः । वेदिषदः प्राश्नन्तु भवन्तोऽमृतं जुषध्वमऽमृतं भुञ्जीत ॥ "अमृतेन

सह भोक्तव्यमऽसुरा निवर्तन्तां ईश्वरादयः कारणा आग-च्छन्तु ॥ ॥ "यन्मे प्रकामा"दिति भुञ्जानान्समीक्षमाणो जपति । यन्मे प्रकामादुत वाप्यकामादऽसमिद्धे ब्राह्मणेऽब्राह्मणे वा । यत्स्कन्दति निर्ऋतिः पाथमुग्रामऽग्निष्टत्सर्वं शुन्धतु । उशन्तस्तेन पितरो मदन्तां तेन पूतेन पितरो मदन्ताम् ॥ अहोरात्रैः ससन्धिकैरऽर्धमासैश्च मासैर्ऋतुभिः परिवत्सरैः संवत्सरस्य कुक्षिभिश्चान्तरन्यान्पितॄन्दधे ॥ यद्वः क्रव्यादऽजहादेकमऽङ्गं पितृलोकं जनयञ्जातवेदाः । तद्व एतेन पुनराप्यायतामऽरिष्टासः पितरो मादयध्वम् । स्वधा वहध्वममृतस्य योनिं याऽत्र स्वधा पितरस्तां भज-ध्वम् ॥ नारायणस्यार्षम् । मधुवाताऋतायते । अन्तश्चर-सि० । ब्रह्मार्पणं० अमृतोपस्तरणमसिस्वाहा ॥ दक्षिणाग्रा-न्दर्भानास्तीर्य ॥ यास्तिष्ठन्ति० । फट्अस्त्रायफट् । पित्रे-शिवगोत्रायईश्वराय० सांव० शिवश्रा० भूपृष्ठे० अवने-जनंस्वधानमः ॥ उशन्तस्त्वा० । आधारशक्त्यैनमः,

पृथिव्यै, क्षीरार्णवाय, चन्द्रमण्डलाय, वह्निमण्डलाय, सितपद्माय, सत्त्वाय, रजसे, तमसे, अकारतत्त्वाय, उकारत०, मकारत०, नादत० नादान्ततत्त्वाय, समानाय, उन्मनायै, व्यापिन्यै, पराशक्त्यै, ऋग्वेदाय, यजुर्वे, सामवे, अथर्ववेदाय, कृतयुगाय, त्रेतायु, द्वापरयु, कलियुगाय, सहस्रदलपद्मासनाय, अष्टदलपद्मासनायनमः" ॥ तिलास्तोयं ॥ देवताभ्यः पि० ३ । अद्यतावत् । पृथिवीर्दर्विरक्षता तृप्तिः स्वधाऽनुपदस्तांस्तां पृथिवीं दर्विमक्षतां तृप्तिं स्वधामऽनुपदस्तामग्निरिव पृथिवीमुपजीव । पितः अमुकामुकगोत्र एष ते पिण्डः येचाऽत्रत्वाऽन्वेषा ते स्वधा वसुभ्यः स्वधा षष्ठ एष ते लेपः । "अप उपस्पृश्य" ॥ अन्तरिक्षं दर्विरऽक्षता तृप्तिः स्वधाऽनुपदस्तां तामन्तरिक्षं दर्विमऽक्षतां तृप्तिं स्वधामऽनुपदस्तां वायुरिवाऽन्तरिक्षमुपजीव पितामहाऽमुकाऽमुकगोत्र एष ते पिण्डः ये चाऽत्रत्वाऽन्वेषा ते स्वधा रुद्रेभ्यः स्वधा पञ्चम एष ते लेपः ।

अप उपस्पृश्य ॥ द्यौर्दर्विरऽक्षता तृप्तिः स्वधाऽनुपदस्तां तां दिवं दर्विमऽक्षतां तृप्तिं स्वधामऽनुपदस्तां सूर्य इव दिवमु-पजीव प्रपितामह अमुकामुकगोत्र एष ते पिण्डः ये चात्र-त्वाऽन्वेषा ते स्वधा आदित्यभ्यः स्वधा चतुर्थएष ते लेपः । अपउ० ॥ मूलपुरुषा भूमिस्वामिनः पितरः, एष वः पिण्डः स्वधा, ये च वोऽन्वऽत्र पितरो मादयध्वम् । येऽत्र पितरः प्रेता युष्मांस्तेऽनु, य इह पितरो जीवा अस्मांस्तेऽनु, येऽत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूयास्थ, य इह पितरो जीवा वयं तेषां वर्षिष्ठा भूयास्म ॥ एतानि वः पितरो वासांसि, अतो नोऽन्यत्पितरो मायूढ्वं, वीरान्नः पितरो दत्त । पिण्डलेपं निवारयेत् ॥ "शैवे" ॥ "अन्नतिलमध्वाज्यपयो-भिर्दक्षिणहस्ततले वामावर्तेन पिण्डं वर्तयेत्"॥ ॐअग्निष्वात्तेभ्यो विद्महे० ३ अद्यतावत्० (लंदिव्यं शिवस्वरूपिणं सर्वबन्ध-विवर्जितं सर्वकर्मविनिर्मुक्तं धर्माधर्मबहिष्कृतं पिण्डमुत्पा-दयामिस्वधानमः) पितः शिवगोत्र ईश्वर सांवत्सरिके शि-

वश्राद्धे ॐजुंसःपिण्डःस्वधानमः । अपउपस्पृश्य ॥१॥ लंदि-व्यं शिवस्वरू-पितामह शिवगोत्र सदाशिव ! ॐजुंसःपिण्डः स्वधानमः । अपउपस्पृश्य ॥२॥ (लंदिव्यं-शिव)प्रपितामह शिवगोत्र शिव ॐजुंसःपिण्डःस्वधानमः । अपउ० ॥ ३ ॥ एवं । लंदिव्यं-माता शिवगोत्रे बलविकरिणि ॐजुंसः पिण्डः स्वधानमः । अपउपश्स्पृय ॥ लंदिव्यं-पितामहि शिवगोत्रे बलप्रमथिनि ॐजुंसःपिण्डःस्वधानमः । अपउ ॥ लंदिव्यं-प्रपितामहि शिवगोत्रे सर्वभूतदमनि ॐजुंसःपिण्डः स्वधा-नमः । अपउपस्पृश्य ॥ वासांसिस्वधानमः । वीरान्नंस्वधा-नमः ॥ पिण्डलेपं निवारयेत् ॥ पित्रे वा मात्रे सां० शिवश्राद्धे समालभनं गन्धःस्वधा । मूलपुरुषेभ्यः समालभनं गन्धः स्व-धानमः पित्रे सांवत्सरिके शिवश्राद्धे अर्घः, पुष्पं, दीपः धूपः, भक्ष्यभोज्यफलमूलबलिनैवेद्यमऽन्नंस्वधानमः पित्रे सां० तिलमधुमिश्रमुदकपात्रमाऽचमनीयंजलंस्वधानमः । पित्रे हिमपानादि स्वधानमः ॥ "सव्येन" । आचम्य ॥ वसन्ता-

यनमः ॥ "अपसव्येन" ॥ [ यास्तिष्ठन्ति ॥ ऊर्जं वहन्ती अमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधास्थ पितॄन्मे तर्पयत] फट्अस्त्रायफट् ॥ ऊर्जांसिनमस्कारं करोमिनमः॥ पिण्डेषु पुष्पाणि ॥ ॐआंप्रभुशक्तयेस्वधानमः, ॐईंज्ञानशक्तयेस्वधानमः ॐऊंक्रियाशक्तये, क्षंईशानवक्त्राय, यंतत्पुरुषव, रंअघोरव,वंवामदेवव, लंसद्योजातव, सर्वज्ञत्वहृद, तृप्तिशिर, अनादिबोधशिखायैवषट्, स्वतन्त्रकवचाय, अलुप्तशक्तयेनेत्र, अनन्तशक्तये अस्त्रायफट्, पित्रे सांवत्सरिके शिवश्राद्धे वासांसिस्वधानमः ॥ "सव्येन" [मा मे क्षेष्ठेति सतृणमन्नमभ्युक्ष्य ॥ मामेक्षेष्ठाबहुमेपूतमऽस्तुब्रह्मानोमेजुषतामन्नमन्नम् । सहस्रधारममृतोदकं मे पूतमस्त्वेतत्परमे व्योमन्] ॥ देवतायै बलिमुपहरेत्, सावित्राणि० महागणपतये० पितृगणदेवताभ्योनमो नैवेद्यं निवेदयामिनमः ॥ "अपसव्येन" ॥ [ सर्वमऽन्नमुपादाय सतिलं दक्षिणामुखः । वारिणाऽप्लाव्य तच्चान्नं पृच्छेत्प्रश्नत्रयं द्विजः ॥ विषदमऽ-

न्नमाऽन्नीय । कश्चित्सम्पन्नं भोः "सुसम्पन्नं" तृप्यन्तु भवन्तः "तृप्ताः स्मः" शेषमन्नमिष्टैः सह ॥ अग्निदग्धाश्च ये जीवा येऽप्यऽदुग्धा कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ येषां न पचते माता येषां न पचते पिता । उच्छिष्टं ये च कांक्षन्ति तेषां तृप्तिः स्वधानमः ] "विकिरं" ॥ असत्कुले प्रमीता ये पतिताः समयद्विषः । दग्धा अदग्धा कुगतयस्ते तृप्यन्तुस्वधावौषट् ॥ "सव्येन" ॥ [ असोमपाश्च ये देवा यज्ञभागविवर्जिताः । तेषामन्नं प्रदास्यामि विकिरं वैश्वदेवके ] ॥ ये रुद्रा रौद्रकर्माणः शिवयागाद्बहिष्कृताः । सर्वे ते परितृप्यन्तु विकिरेण हि सर्वदा ॥ "तृप्तानाचम्य" ॥ अपसव्येन । विप्रानाचमेत् ॥ पित्रे सांवत्सरिकेशिवश्राद्धे आचमनीयंस्वधानमः ॥ "सव्येन" विश्वेभ्योदेवेभ्यः रुद्राऽनन्ताभ्यामाऽचमनीयं नमः ॥ अपसव्येन ॥ [यन्मे रामः शकुनिरित्यऽर्धप्रदक्षिणं कृत्वा दक्षस्कन्देन पिण्डानवेक्ष्य प्रत्येत्य च । यन्मे रामः शकुनिः

श्वापदाश्च यन्मे शुचिः मन्त्रकृतस्य प्राशत् । वैश्वानरः सविता तत्पुनातु तस्मिन्पूते देवता मादयन्तां तेन पूतेन पितरो मदन्ताम् ] नमोऽस्तु सर्वयोगिभ्यः सिद्धेभ्यश्च नमोनमः । मूर्तामूर्तेश्वरग्राहिन्नमः शक्तिगणाय ते ॥ यास्तिष्ठन्ति ॥ फट्अस्त्रायफट्" ॥ पित्रे शिव० सां० शिव० दक्षिणायै तिलहिरण्य ॥ अभिरमन्तु भवन्तोऽभिरताः स्मः । देवाश्च पितरश्चैतत्पूतमन्त्रोपजीवतामस्मिंल्लोके मां धत्त जीवेम शरदः शतं पश्येम शरदः शतम् ॥ अथास्मभ्यमूर्जं धत्त ज्योतिर्धत्ताऽजरं न आयुः ॥ यदऽन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ तृप्यन्तु भवन्तः पितरो ये च भवतोऽनु ये चाऽस्मास्वाऽशंसन्ते तृप्यतं । तृप्यन्तु भवन्तः पितामहा ये[२]० । तृप्यन्तु भवन्तः प्रपितामहा येच[३] भवतोऽनु येचा-॥ तृप्यन्तु भवत्यो मातरो याश्च भवतीरनु याश्चास्मास्वां० । तृप्यन्तुभवत्यः पितामह्यो याश्च[२]० । तृप्यन्तु

भवत्यः प्रपितामह्यः याश्च भवतीरनु ॥ ( एवं मातामहा इत्यादि ) तृप्यत ३ एवमस्तु । पितुः सां० शिवश्राद्धे दत्तमन्नमक्षय्यमस्तुस्वधानमः ॥ "इदमन्नमक्षय्यमस्तु स्वधानमः, इति विप्राःप्रतिब्रूयुः ॥ दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेवच। श्रद्धा च नो मा व्यगमद्बहु देयं चनोस्त्विदम् ॥अन्नं च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कंचन"॥ "एता एवाऽशिषः सत्यः सन्त्विवति विप्राः प्रतिब्रूयुः ॥ "सव्येन" शन्नोदेवी ॥ विश्वेभ्योदेवेभ्यः रुद्रानन्ताभ्यां दक्षिणायै तिलहिरण्यरजतनिष्कर्णंददानि ॥ विश्वेदेवाः रुद्रानन्तौ प्रीयेतांप्रीतौभवेतां ॥[शन्नो भवन्तु वाजिनो हव्येषु देवत्राताामितद्रवाः स्वर्कीः । जम्भयन्तोऽहिवृकं रक्षांसिसनेम्यस्मद्यूयमऽनमीवाः । संस्रावपात्रमुत्तानं कृत्वा ताभिरद्भिः पुत्रकामो मुखमनक्ति ॥ "वाजेवाजे" इतिकुशविसर्जनम् ॥ वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य

मधु पिबतु मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ अपसव्येन "अमावाजस्ये"ति पिण्डपरिषेकः ॥ आमा वाजस्य प्रसवोजगम्यादाऽमाद्यावापृथिवी विश्वरूपे । आमाऽगन्तां पितरं मातरं चामा सोमो अमृतत्वेन गम्यात् ]॥ ततो वाम देवमन्त्रेण पिण्डान्परितः पितृपात्रेणवारिधारां प्रक्षिपेत् । "यथा" । वामदेवायस्वधानमः, ज्येष्ठाय, रुद्राय कालाय, कालविकरणाय बलविकरणाय बलप्रमथनाय, सर्वभूतदमनायस्वधानमः, मनोन्मनायस्वधानमः ॥ सव्येन ॥ कलशपृच्छां सम्पाद्य ॥ गायत्र्यैनमः ३ तन्महेशायविद्महे ३ । "अपसव्येन" देवताभ्यः ३ । अग्निष्वात्तेभ्यो ३ । अद्यतावत्० पितुः शिवगोत्रस्येश्वरस्य सांवत्सरिकं शिवश्राद्धं सदैवकं सान्नपूरपूजनं गुरुशिवपूजनमऽच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ शैवाग्नौ । "तेजोऽसि" ॥ हारमनोहरवक्षसमिति ( पृ० ३५२-४ ) पूर्णांदत्त्वा । शिवमऽस्तु यजमानायेतिभस्मतिलकं ॥ विमुञ्चामि ॥ वैदिके । विमुञ्चामि ३ । नयामि ।

"सव्येन" परिसमूह्य९अग्नयेस्वाहा,प्रजापतये, सूर्याय, प्रजा-पतयेस्वाहाँविमुच्य। नयामि। धर्मदेहि ॥ "अपसव्येन" पित्रे शिवगोत्रायेश्वराय सांवत्सरिक शिवश्राद्धे तिलोदकंस्वधा-नमः उदकतर्पणंस्वधानमः ॥ "सव्येन" ॥ ततो गवां-ग्रासादि। याकाचिद्योगिनी०। सौरभेयाः०। "अपसव्येन"। यमाय धर्म०। "सव्येन" यो विश्वभाविनोभूता। "अपसव्येन" आयुः प्रजां०। शैवे॥ श्राद्धमेवंविधं शैवं शैवसायुज्यदं परम्। कर्तव्यं तेन तच्छ्राद्धं दीक्षितेन तदऽन्तिकम्॥ त्रयीसप्तचतुर्युग्ममयी त्रितयवर्त्मनि। स्थितो यः शक्ति-सहितः स जयत्यऽमरेश्वरः॥ "सव्येन" ॐगायत्र्यैनमः ३ तन्महेशाय विद्महे ३ अद्यतावत्। महागणपतेः० आ-त्मनो० पितुः सांवत्सरिकेशिवश्राद्धे कलशपूजनं क्षेत्रेश-पूजनमच्छिद्रमस्तु एवमस्तु॥ एताभ्योदेवताभ्यो यवोदकं-नमः। आपन्नोस्मि०। "अन्नपूरे" सभार्यस्त्रिजगन्नाथ०। (पृ० ३३५-१४) अपारसंसार० करचरण०। क्षमध्वंमम

क्षेत्रेशा- । उभाभ्यां० । नमोब्रह्मणे । पात्राणि चालयेत् । आचम्य ॥ उदकलशमुपनिधाय । शैवे ॥ उत्तिष्ठ देवदेवेश त्वं मण्डलसुरैः सह । रक्षाऽस्मान्पूर्वतो नित्यं धृततत्पुरुषाभिधः। तथा दक्षिणतो रक्ष धृताऽघोरात्मभैरवः ॥ तथैवोत्तरतोरक्ष वामदेवोऽसि शङ्करः। वारुणाशागतो नित्यं सद्योजातोऽसि रक्ष माम् ॥ ऊर्ध्वं रक्ष महेशान त्वमीशानोऽसि देवता । सर्वतः सर्वथा देव सर्वत्राऽस्मिन्भवाध्वनि ॥ पाहि मां याहि देवेशि नित्यानन्दमयं पदम् ॥ मन्त्रार्थाः ॥ "ब्राह्मणपुष्पं ॥ अनन्तशाख ॥ नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः । अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥

इति सांवत्सरिकशिवश्राद्धविधिः ॥

## अथैकोद्दिष्टशिवश्राद्धविधिः

अन्नपूरपूजामष्टकां चाऽनु ॥ सव्येनाऽऽचम्य ॥ शान्ताकारंभुजगशयनंपद्मनाभं- । श्राद्धे योगेश्वरं चैव० । तिलमधु सम्भारान्संस्कृत्य वामस्कन्दे दृष्टिं निधाय ॥ ॐगायत्र्यैनमः ।

३ । तन्महेशाय विद्महे ३ ॥ अपसव्येन । नमः पितृभ्यः ॥ देवताभ्यः ३ अग्निष्वात्तेभ्यो वि ३ ॥ अद्यतावत् पितुः वा मातुः आदिमौर्ध्वदैहिकं प्रथमं, प्रथममासिकंद्वितीयं, त्रिपाक्षिकंतृतीयं, द्वितीयमासिकंचतुर्थं, पञ्चपाक्षिकं पञ्चमं, तृतीयमासिकंषष्ठं, चतुर्थमासिकंसप्तमं, पञ्चमासिकं अष्टमं, ऊनषाण्मासिकंनवमं, षाण्मासिकंदशमं, सप्तममासिकंएकादशं, अष्टममासिकंद्वादशं, नवममासिकं त्रयोदशं, दशममासिकंचतुर्दशं, एकादशमासिकंपञ्चदशं, ऊनसांवत्सरिकंषोडशं, (मले) द्वादशमासिकंषोडशं, ऊनसांवत्सरिकंसप्तदशं एकोद्दिष्टंश्राद्धं अष्टकापूर्वकं सान्वष्टक्यं ब्राह्मणपूजनमर्चामहं करिष्ये ॐकुरुष्व ॥ शैवे ॥ पितुः शिवगोत्रस्य रुद्रस्य वा मातुः शिवगोत्रायाः रुद्राण्याः-एकादशाहनि आद्यमौर्ध्वदैहिकं सर्वमन्त्रमयंशुद्धं, प्रथममासिकंप्रथमं[२], त्रिपाक्षिकं[३] द्वितीयं, द्वितीयमासिकं तृतीयं[४], पञ्चपाक्षिकंचतुर्थं[५], तृतीयमासिकंपञ्चकं[६], चतुर्थमासिकंषष्ठं[७], पञ्चमासिकंसप्तमं,

ऊनषाण्मासिकंअष्टमं[९], षाण्मासिकंनवमं[१०], सप्तमासिकं दशमं[११], अष्टममासिकंएकादशं[१२], नवममासिकंद्वादशं[१३], दशममासिकंत्रयोदशं[१४] एकादशमासिकंचतुर्दशं[१५], सार्धैकादशमासिकंपञ्चदशं[१६], ऊनसांवत्सरिकं षोडशं[१७], ( मले ) द्वादशमासिकं षोडशं[१७], ऊनसांवत्सरिकं सप्तदशं[१८], एकोद्दिष्टंशिवश्राद्धं सदैवकं सान्वष्टक्यं सान्नपूरविधानं गुरुशिवपूजनमऽर्चामहंकारिष्ये ॐकुरुष्व ॥ तिलान्विकीर्य । अग्निंपरिसमूह्य ९ ॥ निहन्मि सर्वं ॥ फट्श्राद्धविघ्नान् यातुधानान्निहन्मि ॥ पितुः वा मातुः आद्यमौर्ध्वदैहिकेप्रथमेएतत्ते आसनं । शैवे । पितुः आद्यमौर्ध्वदैहिकेसर्वमन्त्रमयेशुद्धे एकोद्दिष्टेशिवश्राद्धे इदमासनंस्वधानमः ॥ पितः आद्यमौर्ध्वदैहिकेप्रथमे ब्राह्मणं त्वा पूजयामि ॐपूजय ॥ पित्रेशिवगोत्राय ईश्वराय आद्यमौर्ध्वदैहिके सर्वमन्त्रमये शुद्धेएकोद्दिष्टेशिवश्राद्धे गुरुं त्वां पूजयामि । ॐपूजय ॥ नावाहनं । तिलान्विकीर्य ॥ अपयन्त्वऽसुरा ॥ यास्तिष्ठन्ति-यन्मेमाता ॥ फट्अस्त्रायफट् ॥ लाजाश्च ॥

पितः आद्यमौर्ध्वदैहिकेप्रथमे एतत्ते पाद्यं । शैवे । पित्रे आद्यमौर्ध्वदैहिके सर्वमन्त्रमये शुद्धे-पाद्यंस्वधानमः ॥ पाद्य-शेषं निवार्य । "सव्येन" आचम्य । "अपसव्येन" ॥ यास्ति-ष्ठन्ति ॥ फट्अस्त्रायफट् ॥ आपःक्षीरं ॥ स्वांस्वांसोमायनमः "जले" । इत्यादि । पितः आद्यमौर्ध्वदैहिके सर्वमन्त्रमयेशुद्धे इदं तेऽर्घ्यम् ॥ शैवे । पितः इदं तेऽर्घ्यंस्वधानमः ॥ पितः आ-द्यमौर्ध्व-एष ते गन्धः । शैवे । पित्रे शिवगोत्रायगन्धः स्वधानमः ॥ "सव्येन" । आचम्य । "अपसव्येन" ॥ पितः आद्य-एषतेऽर्घः । एतत्तेपुष्पं । "शैवे" । पित्रे शिव-अर्घः-स्वधानमः पुष्पंस्वधानमः । पितः आद्यमौएषते धूपः एषते दीपः ॥ पित्रे शिवगोत्राय धूपःस्वधानमः दीपःस्वधा-नमः ॥ पितः आद्यमौर्ध्वदै-एतत्ते वासः ॥ "शैवे" । (ॐ-आंप्रभुशक्तयेनमः ईंज्ञानशक्तयेनमः, ऊंक्रियाशक्तयेनमः) । रंप्र-दीक्षाकलायैनमः, रंदहनीक-, रंघोराक-, रंक्रूराक-, रंरसभ-क्षिणीक-, रंविद्यातत्त्वक-, रंलेलिहानाक-, रंवैधृतिक-, रंरा-

त्रिकलायैनमः, रंघोरविक्रमाक-, रंमहोच्छुमाकलायै नमः। हः अनन्तशक्तयेअस्त्रायफट्,हःअनन्तशक्तिस्वरूपाय "पित्रे शिवगोत्राय ईश्वराय आद्यमौर्ध्वदैहिके सर्वमन्त्रमये शुद्धे वासांसिस्वधानमः ॥१॥ (ॐआंप्रभु, ईंज्ञान,ऊंक्रिया-) अंमरीच्यैनमः, अंपूषायै, "पित्रेशिवगोत्रायईश्वराय, प्रथममासिकेप्रथमे वासांसिस्वधानमः ॥ २ ॥ ( ॐआं, ईंज्ञा, ऊंक्रि) अंयशस्विनीकलायैनमः, "पित्रे, त्रिपाक्षिकेद्वितीये वासांसि ॥३॥ (ॐआंप्रभुशक्तयेनमः, ईंज्ञा, ऊंक्रि) इंज्वलित्यै, इंसुमनायै "पित्रे, द्वितीयमासिकेतृतीयेवासांसि ॥४॥ (ॐआं, ईं, ऊंक्रि ) इंप्रीत्यै "पित्रे पञ्चपाक्षिकेचतुर्थे वासां ॥ ५ ॥ ॐआंप्र, ईंज्ञा, ऊंक्रि ) उंधूम्राकलायै, उंप्रीतिकर्यै, पित्रे, तृतीयमासिकेपञ्चमे वासांसिस्वधानमः ॥६॥ (ॐआं, ईं, ऊं) इं तापिन्यै, ऊंधृत्यै "पित्रे, चतुर्थमासिकेषष्ठेवासां ॥ ७॥ ( आं, ईंज्ञान, ऊं ) ऋंसौम्यायै, ऋंतापिन्यै, ऋंधृतिकर्यै, पित्रे, पञ्चममासिके सप्तमे वासांसिस्वधानमः ॥८॥ (आं, ईं,

ऊं ) ऐंसौम्यायै पित्रे ऊनषाण्मासिकेअष्टमे वासांसि ॥९॥ (आं, ईं, ऊं ) ऊंपाचिन्यै लंमरीच्यै पित्रे-षाण्मासिकेनवमे वासांसि ॥१०॥ (आं, ईं, ऊं) ॐहव्याकहनायै, लूंअंशुमालिन्यै पित्रे सप्तममासिके दशमेवासांसिस्वधानमः ॥११॥ (आं, ईं, ऊं) ॐतेजोवत्यै, ॐशशिन्यै, पित्रे अष्टमासिके एकादशे वासांसि ॥१२॥ (आं, ईं, ऊं) ॐशतधामायै ॐहृद्रतायै पित्रे नवममासिके द्वादशेवासांसि ॥१३॥ (आंप्रभुशक्तयेनमः, ईं, ऊं) ॐस्वधामायै, ॐलक्ष्म्यै पित्रे दशममासिकेत्रयोदशे वासांसि ॥१४॥ (आं, ईं, ऊं) ॐअंपद्मगर्भायै, ॐपित्रे एकादशमासिकेचतुर्दशे वासांसि ॥१५॥ ( आं, ईं, ऊं ) अंसम्पूर्णमण्डलायै, पित्रे सार्धैकादशमासिकेपञ्चदशे वासांसिस्वधानमः ॥१६॥ (आं, ईं, ऊं) सम्पूर्णकलायै तमोपहायै पित्रे, द्वादशमासिकेषोडशे वासांसिस्वधानमः ॥ १७ ॥ (ॐआंप्रभुशक्तये, ईंज्ञानशक्तये, ऊंक्रियाशक्तयेनमः ) अःतमोपहायै, अःअमृतकलायैनमः पित्रे शिवगोत्रायईश्वरायऊनसांवत्स-

रिकेसप्तदशेएकोद्दिष्टेशिवश्राद्धे वासांसिस्वधानमः ॥ १८ ॥
पितुः अद्यमौर्ध्वदेहिके अर्घ्यदानाद्यर्चनविधिः ॥ पितुः
शिवगोत्रस्य आद्यमौर्ध्वदेहिके सर्वमन्त्रमयेशुद्धे, अर्घ्य-
दानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ वसवो मे स-
दस्या । इदं पित्रे श्रृतमभिधार्य प्रक्षाल्य मूलतो मेक्षणमव-
दधाति ॥ अग्नावधिश्रित्य तत्र चाभिधार्य दक्षिणत उद्वास्य
पुनश्चाभिधार्य ॥ यज्ञस्य सन्ततिरसि । "पुरस्तात्" ॥ श्रियै
सोमवत्यै समालभनं गन्धादि ॥ श्रियन्देवीं । प्रणवं मनसा
ध्यात्वा ॥ ॐ ॐ । "ॐअग्नये अङ्गिरसे शिवाग्नये स्वधा-
नमः ॥ पात्रेषुनिक्षिपेत् ॥ ये मामका-क्षीरं घृतंवाऽ-
सिच्य ॥ शैवे । ॐह्रींश्रींपापान्तकारिणिपापंहनहनपापंद-
हदहमाये माचलेह्रींस्वाहा क्षीरंघृतंवाऽसिच्य ॥ पितः
आद्यमौ-इदंतेअन्नंइदंमधु । इदं विष्णुर्विचक्रमे० । तद्वि-
ष्णोः-विष्णो इदं रक्षस्व ॥ पित्रे शिवगोत्रायईश्वराय-आद्य-
मौर्ध्व-इदं ते अन्नं । अन्नंस्वधानमः २ अन्नं मधु २ रुद्र

इदं रक्षस्व । "स्त्रीविषये" ॥ रुद्राणि इदं रक्षस्व ॥ पितः आद्यमौ-॥ पित्रे शिवगोत्राय-आद्यमौ-यथोपस्थितं दत्तं दास्यमानेन-एतत्ते अमृतमन्नं । अन्नंस्वधानमः ॥ "सव्येन" ॥ पयः पृथिव्यां । सहस्रशीर्षा । हिरण्यवर्णा । "अपसव्येन" ॥ यास्तिष्ठन्ति । पितः आद्यमौ-एतत्तेऽपोशानं । पित्रे शिव-आद्यमौ-अपोशानं जलं स्वधानमः । प्राश्नातु भवान्, वा, भवती ॥ अमृतं जुषस्वाऽमृतं भुंक्ष्व ॥ अमृतेन सह भोक्तव्यं रुद्रादयः कारणा आगच्छन्तु ॥ दक्षिणागान्दर्भानास्तीर्य । पितःआद्यमौ-एतत्तेऽवनेजनं ॥ पितः आद्यमौर्ध्वे-शिवश्राद्धे अवनेजनंस्वधानमः ॥ आधारशक्त्यैस्वधानमः, पृथिव्यै, स्वधानमः क्षीरार्णवाय, चन्द्रमण्डलाय, वह्निमण्डलाय, सितपद्माय, सत्त्वाय, रजसे, तमसे, अकारतत्त्वाय, उकारत, मकारत, नादत, नादान्तत, सुमनाय, उन्मनाय, परशक्तये, व्यापिन्यै, ऋग्वेदाय, यजुर्वे, सामवे, अथर्ववे, कृतयुगाय, त्रेता, द्वापर, कलियु, शतदलपद्मासनाय, सहस्रद, अष्टद-

लपद्मासनायनमः ॥ देवताभ्यः ३ अद्यतावत-पृथिवीदर्विं-
पितः आद्यमौ-एकोद्दिष्टे-एषतेपिण्डः,अपउपस्पृश्य। "एवं"।
अन्नतिलमध्वाज्यपयोभिः-। (अग्निष्वात्तेभ्योवि-३ अद्यताव-
त्-लंदिव्यंशिवस्वरूपिणं सर्वबन्धविवर्जितं सर्वकर्मविनिर्मुक्तं धर्मा-
धर्मबहिष्कृतं पिण्डमुत्पादयामिनमः ) प्रदीप्ताकलायैनमः, दह-
नीक, घोराक, क्रूराक, रसभक्षिणीक, वैधृतीक, लेलि-
हानाक, रात्रिक, घोरविक्रमाक, महोच्छुष्माक, हृद्रताक,
रौद्रीकलायैनमः १२ हःअनन्तशक्तयेअस्त्रायफट्, हः अन-
न्तशक्तिस्वरूपायनमः पितः आद्यमौर्ध्वदैहिकेसर्वमन्त्रमयेशुद्धे
एकोद्दिष्टे शिवश्राद्धे ( ॐजुंसःपिण्डः स्वधानमः "अप उपस्पृ-
श्य") ॥१॥ (अग्निष्वा-मिनमः) प्रभाख्यासूर्यकलायै, अमृता-
ख्यासोमक । पितः प्रथममासिकेप्रथमे ( ॐजुंसःपिण्डः,
अपउपस्पृश्य) ॥२॥ ( अग्नि-यामिनमः ) अच्छादिनीसोमक-।
पितः-त्रिपाक्षिकेद्वितीये (ॐजुं-स्पृश्य) ॥३॥ (अग्निष्वात्तउत्पा-
दयामिनमः ) प्रतापिनीसूर्यकलायै, ज्योत्स्नावतीसोमक-।

पितः-द्वितीयमासिके तृतीये (ॐजुं-स्पृश्य) ॥ ४ ॥ (अग्नि-मिनमः) स्यन्दिनीसूर्यक-, मोदिनीसोमकलायै पितः पञ्चपाक्षिके चतुर्थे (ॐजुं-स्पृश्य) ॥ ५ ॥ (अग्निष्वात्तेभ्यो पिङ्गासूर्यकलायै, मनोहारिसोमक-पितः-तृतीयमासिके पञ्चमे (ॐजुं-स्पृश्य) ॥ ६ ॥ (अग्नि-नमः) ध्वान्तहारिणीसूर्यकलायै, मालिनीसोमक-। पितः-चतुर्थमासिके षष्ठे (ॐजुं-स्पृश्य) ॥ ७ ॥ (अग्नि-नमः) खण्डमध्यासूर्यकलायै, विमलासोमक पितः पञ्चमासिके सप्तमे (ॐजुं) ॥ ८ ॥ (अग्नि-नमः) ह्रांख्रींसः सू-वामासो-पितः-ऊनषाण्मासिके अष्टमे (ॐजुं) ॥९॥ (अग्नि-) भास्वरासूर्यकलायै महानन्दासोमकलायै पितः-षाण्मासिकेनवमे (ॐजुंसः) ॥ १० ॥ (अग्नि-) ज्येष्ठासू-गोमतीसो-पितः-सप्तममासिके दशमे (ॐजुं) ॥ ११ ॥ (अग्निष्वा) अरुणाख्यासू-भद्राख्यासोम-पितः-अष्टममासिके एकादशे (ॐजुंसः) ॥ १२ ॥ (अग्नि) विश्वबोधिनीसू-रसवर्षिणीसो-पितः-नवममासिके द्वादशे

( ॐजुंसःपिण्डःस्वधानमः ) ॥ १३ ॥ ( अग्नि ) रसपाचिनीस्व-रसवृद्धिसो-पितः-दशममासिके त्रयोदशे ( ॐजुं ) ॥ १४ ॥ ( अग्नि ) दंष्ट्रास्व-रसपूरिणीसो-पितः एकादशमासिके चतुर्दशे ( ॐजुं ) ॥ १५ ॥ ( अग्नि ) ॐह्रांख्रींसःस्व-मोदिनीसो-पितः-सार्धैकादशमासिके पञ्चदशे (ॐजुं) ॥ १६ ॥ (अग्नि) ॐह्रांख्रींसःस्व-मोदिनीसो-पितः द्वादशमासिके षोडशे ( ॐजु )॥ १७ ॥ मलश्चेत्तदा ॥ ( अग्नि ) सम्पूर्णमण्डलास्व-ज्वलिनीसोमकलायैनमः पितः शिवगोत्र ईश्वर ऊनसांवत्सरिके षोडशे एकोद्दिष्टेशिवश्राद्धे ॐजुंसः पिण्डःस्वधानमः । अपउपस्पृश्य । (अग्निष्वात्तेभ्यो) सूर्यकलाभ्योनमः, चन्द्रकलाभ्योनमः पितः द्वादश-मासिकेसप्तदशे ॐजुंसःपिण्डः स्वधानमः । अप उपस्पृश्य ॥ १८ ॥ एतानीतिपितर्वासः । वासांसिस्वधानमः । वीरान्नः पितर्देहि । वीरान्नं स्वधानमः । पिण्डलेपं निवार्य ॥ पितः आद्यमौएषतेगन्धः । पित्रेशिव-आद्यमौ-समालभनंगन्धः स्वधानमः।

पितः एषतेऽर्घः एतत्तेपुष्पं । पित्रे शिवगोत्रायरुद्राय अर्घःस्वधानमः पुष्पं दीपःस्वधानमः धूपः । पितः एषते भक्ष्यभोज्यफलमूलबलिः । पित्रे भक्ष्यभोज्यफलमूलब-लिःस्वधानमः ॥ पितः एतत्ते तिलमधुमिश्रं । पित्रे तिल-मधुमिश्रमेतत्ते-आचमनीयंस्वधानमः । पितः एतत्तेहिमपा-नादि । पित्रे हिमपानादिस्वधानमः ॥ "सव्येनाचम्य" । वसन्तायनमः ॥ अपसव्येन ॥ यास्तिष्ठन्ति ॥ ऊर्जंवहन्ती ॥ अक्षय्यं नः कुलं भूयाद्वीरमूलं स्वधात्मकम् । भवभक्तमनन्तं च समिद्धं शाक्तमाचरेत् । ऊर्जांसिनमस्कारं करोमिनमः ॥ "पिण्डेषु पुष्पपूजा" पूर्ववत् ॥ ओंप्रभुशक्तयेनमः ईंज्ञानशक्तये ऊंक्रिया, सोमकला ॥ पूषाकलायै, यशाकलायै, सुमनसा, प्रीति, प्रीतिकरी, धृति, धृतिकरी, सौम्या, मरीचि, अंशु-मालिनी, शशिनी, हृद्रताकलायै, लक्ष्मी, छाया, सम्पूर्णम-ण्डलकलायै, अमृतकलायैनमः ॥ सूर्यकला ॥ मरीचिकलायै, ज्वालिनी, धूम्रा, तपनी, तापिनी, पाचिनी, हव्यवाहा,

तेजोवती, शतधामा, सुधामा, पद्मगर्भा, तमोपहाकलायै नमः वासांसिस्वधानमः ॥ अद्यतावत् पितुः पाथेयं नित्यान्नम् ॥ मा मेक्षिष्टा ॥ नैवेद्यं । "विकिरं" तिलक्षीरविकिरीकृत्य । स्वधितं । सुस्वधितमिति ॥ ये केचित्समये लुप्ता भूताः कर्मवशानुगाः । इहैव समयोच्छिष्टं बलिं गृह्णन्तु ते तृप्यन्तुस्वधावौषट् ॥ सव्येनाऽऽचम्य । अपसव्येन ॥ पितः एतत्ते आचमनीयं । पित्रे शिवगोत्राय-आचमनीयंस्वधानमः ॥ यन्मेरामः शकुनिः "इत्यर्धप्रदक्षिणम्"। शैवे ॥ नमोस्तु सर्वयोगिभ्यः सिद्धेभ्यश्चनमोनमः । मूर्तामूर्तेश्वरग्राहिन्नमः शक्तिगणायते । इति । यास्तिष्ठन्ति । फट्अस्त्रायफट् । पितः दक्षिणा । पित्रे शिव-दक्षिणायै । अभिरमतु भवान् । तृप्यतु भवान्, तृप्तोसि प्रेतस्तृप्यतु ॥ प्रतिमाविसर्जनं" ॐभूः पुरुषं विस-३ नमोस्त्वऽनन्ताय ३ पितुः विष्णुपदवीप्राप्त्यर्थं शेषशायिनारायणपू०आपन्नोऽसि । ध्येयः सदा०॥ आदौ दानप्रतिष्ठायां घटदानं तदनु जलकुम्भं ततोनित्यकुम्भं

प्रतिमादानं ततोऽक्षय्यं ॥ पितरं आद्यमौ-दत्तमन्नमक्षय्य-मस्तु । पितुः शिवगोत्रस्य दत्तमन्नमक्षय्यमुपतिष्ठतु ॥ "स-व्येन" ॥ ब्राह्मणपृच्छांविसर्ज्य । गायत्र्यैनमः ३ तन्महेशायवि ३ "अपसव्येन" नमः पितृभ्यः ३ अग्निष्वात्तेभ्योवि ३ अद्य तावत् पितुर्वामातुः आद्यमौर्ध्वदैहिकं प्रथमं, अष्टका-पूर्वकं सान्वष्टक्यं एकोद्दिष्टं श्राद्धं । पितुः शिवगोत्रस्य रुद्रस्य आद्यमौर्ध्वदैहिकं सर्वमन्त्रमयं शुद्धं एकोद्दिष्टं शि-वश्राद्धं सदैवकं सान्नपूर्वविधानं गुरुशिवपूजनमच्छिद्रं सम्पूर्णमस्तु ॥ अन्वष्टकां कृत्वा ततोऽग्निविसर्जनं । ते-जोसि । हारमनोहर० । पूर्णा । विमुञ्चामि । नयामि । धर्म देहि ॥ पितः एतत्ते तिलोदकं । पित्रे शिवगोत्राय रुद्राय तिलोदकंस्वधानमः ॥ ततः कुम्भतर्पणम् ॥ सव्येन । गवां ग्रासादि ॥ या काचित् । क्षेत्रेशबलिमन्तु । अप-सव्येन । "पिण्डेषु" तद्विष्णोः इतिपुष्पाणि ॥ शैवे । त्रयीसप्त ॥ कलशपृच्छां विसर्ज्य ॥ गायत्र्यैनमः ३ अद्यतावत् महागण-

पतेः अग्नेःवायोः, हेरुकादीनां आत्मतः पितुः तस्य परलोके अक्षयफलप्राप्त्यर्थं कलशपू-क्षेत्रेशपूजनमच्छिद्रं । यवोदकंनमः । आज्ञा मे दीयतां । ईशानविष्णु । कलिकलुषविमुक्तैः । क्षमध्वं मम क्षेत्रेशाः ॥ नमोब्रह्मणे । पात्राणि चालयेत् । सव्येनाऽचम्य ॥ उदककलशं ॥ अपसव्येन ॥ अद्यतावत् पितुः पाददाहादिदोषनिवारणार्थं तृणासनं तृणपादुकं ददामि ३ ॥ इत्येकोद्दिष्टं शैवश्राद्धम् ॥

## अथ शैवीसपिण्डीकरणम्

आदौ अन्नपूरपूजांविधाय श्राद्धमारभेत ॥ सव्येनाऽऽचम्य ॥ श्राद्धकाले गयां ध्यात्वा । श्राद्धे योगेश्वरं चैव ॥ शान्ताकारं भुजग० । वामस्कन्धे दृष्टिं विधाय ॥ ॐगायत्र्यैनमः ॐभूर्भुवः ३ । तन्महेशाय वि ॥ अपसव्येन । नमः पितृभ्यः । देवताभ्यः पितृभ्यश्च ३ ॥ अग्निष्वात्तेभ्योविद्महे ३ अद्य तावत् पितामहस्य शिवगोत्रस्य ईश्वरस्य, प्रपितामहस्य शिवगोत्रस्य सदाशिवस्य, वृद्धप्रपितामहस्य शिव० शिवस्य, पितुः

शिव० रुद्रस्य । "वा" । पितामह्याः शिवगोत्रायाः बलवि-
करण्याः, प्रपितामह्याः शिव० बलप्रमथिन्याः, वृद्धप्रपिता-
मह्याः शिवगोत्रायाः सर्वभूतदमन्याः, मातुः शिवगोत्रायाः
रुद्राण्याः । प्रथमसमानसपिण्डीकरणं । "वा" । सांवत्स-
रिकसपिण्डीकरणं शिवश्राद्धं सदैवकं सान्नपूरविधानं गुरु-
शिवपूजनमर्चामहं करिष्ये ॐकुरुष्व ॥ "तिलसर्षपयवा-
न्विकीर्य" ॥ अग्निं परिसमूह्य ९ । निहन्मिसर्वं० ॥ पुनः ।
निहन्मि सर्वं- ॥ ( फट्श्राद्धविघ्नान् यातुधानान्निहन्मि )
पुनः ( फट्श्राद्धविघ्नान्यातु- ) "सव्येन" ॥ विश्वेषान्दे-
वानां ( रुद्राऽनन्तयोः ) सपिण्डीकरणे शिवश्राद्धे इद-
मासनंनमः । विश्वेभ्योदेवेभ्यः ( रुद्राऽनन्ताभ्यां ) ब्रा-
ह्मणं त्वां भोजयामि । ॐभोजय । विश्वान्देवान् ( रुद्रा-
नन्तौ ) आवाहयिष्यामिॐमावाहय । "यवान्विकीर्य" ॥
आगच्छन्तु महाभागा ॥ शन्नोदेवी । ( फट्अस्त्रायफट् )
लाजाश्च । विश्वेभ्योदेवेभ्यः ( प्रथमे ) सपिण्डीकरणे

श्राद्धे कालकामाभ्यां वार्षिके सपिण्डी-(पुरूरवार्द्रवसोभ्यां) शैवे, रुद्रानन्ताभ्यांपाद्यंनमः ॥ शन्नोदेवी । फट्अस्त्रायफट् । आपः क्षीरं । (स्वांस्वांसोमाय इत्यादि) विश्वेदेवौ । रुद्रानन्तौ इदं वां अर्घ्यंनमः । विश्वेभ्योदेवेभ्यः । रुद्रानन्ताभ्यां गन्धार्घपुष्पधूपदीपवासः अर्घ्यदानादि ॥ ओमासश्चर्षणी ॥ अपसव्येन । पितामहस्य इदमासनं स्वधा । पितः एतत्ते आसनं । पितामहस्य शिवगोत्रस्य ईश्वरस्य इदमासनं स्वधानमः ॥ पितामहाय अमुकगोत्राय शिवगोत्रायईश्वराय, प्रपितामहायशिव-वृद्धप्रपितामहायशिवाय ब्राह्मणं त्वा पूजयामि, पितः समानसपि-ब्रा-पूजयामि । पित्रे शिवगोत्रायरुद्राय समान-गुरुं त्वां पूजयामि । पितामहं शिवगोत्रमीश्वरं प्रेतसहितंपितामहं-रुद्रसहितंईश्वरमावाहयिष्यामि, प्रपितामहं शिवगोत्रं सदाशिवं प्रेतसहितं प्रपितामहं रुद्रस-सदाशिवमावा-, वृद्धप्रपितामहं शिवगोत्रं शिवं प्रेतसहितं वृद्धप्रपितामहं रुद्रसहितं शिवमावाहयिष्यामि ॐआवाहय ॥

एवं । पितामहीं शिवगोत्रां बलविकरणीं प्रेतसहितां पितामहीं रुद्राणीसहितां बलविकरणीं ॥ तिलान्विकीर्य ॥ श्राद्धाऽनुवाकौ तूखानामार्षम् ॥ प्रैत्ये ॥ अपयान्त्वऽ-सुराः ॥ यास्तिष्ठन्ति, यन्मे माता, यन्मे पितामही, यन्मे प्रपितामही । प्रैत्ये । यास्तिष्ठन्ति-स्वधयामदस्व ॥ फट्अस्त्रायफट् ॥ लाजाश्च ॥ भगवन्तः पाद्यं । भगवन् पाद्यं ॥ स्त्रियां । भगवत्यः पाद्यं । भगवति पाद्यं २ पितामहाय समान-सपिण्डीकरणे पाद्यं स्वधा ॥ पितामहाय शिवगोत्राय पाद्यंस्वधानमः ॥ सव्येनाऽचम्य । अपसव्येन । "पात्रचतुष्टये" ॥ यास्तिष्ठन्ति-यन्मेमाता । फट्अस्त्रायफट् ।१॥ यास्तिष्ठन्ति-यन्मेमाता[1], यन्मेपितामही[2] । फट्अ-।२॥ यास्तिष्ठन्ति-यन्मेमाता[1] । यन्मेपितामही[2] । यन्मेप्रपितामही[3] । फट्अ-।३॥ प्रैत्ये ॥ यन्मे माता । फट्अस्त्रायफट् ।४॥ गन्धोदकतिलैर्मिश्रं कुर्यात्पात्रचतुष्टयम् । अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्" ) ॥ "संसृजतुत्वा पृथिवीर्वायुरग्निः प्रजापतिः संसृजध्वं पूर्वेभिः

पितृभिः सह । ये समानाः सुमनसः पितरो यमराज्ये तेषां लोके स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समानाः सुमनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामऽस्मिंल्लोके शतं समाः । समाना व आकूतानि समाना हृदयानि वः । समानमऽस्तु वो मनो यथा वः समहासति । सं वो मनांसि संव्रताः समुच्चित्तान्याकरत् । अमी ये विव्रताः स्थ नस्तान्वः सन्नमयामसि । वसुभ्यः स्वधा" शैवे । पितरं शिवगोत्रं रुद्रं पितामहे शिवगोत्रे ईश्वरे अर्घ्ये योजयामि वौषट्, कृतंकृतं समुत्कृष्टं जितं गुप्तमसत्कृतम् । तदस्तु कृशमुत्कृष्टं परमेश तवाज्ञया ॐहूंपूरय २ मुखव्रते नियमेश्वराय ॐॐआत्मतत्त्वाधिपतये ईश्वरायस्वधानमः ॥ १ ॥ पुनः संसृजतुत्वा-पितरंप्रपितामहे शिवगोत्रे सदाशिवे (अर्घ्येयोनियमेश्वराय) ॐजुंविद्यातत्त्वाधिपतये सदाशिवायस्वधानमः ॥ २ ॥ पुनः । संसृजतुत्वा-पितरंशिवगोत्रंरुद्रं वृद्धप्रपितामहे शिवगोत्रे शिवे

( अर्घ्येयोज-नियमेश्वराय ) ॐसः शिवतत्वाधिपतये शिवा-यस्वधानमः ॥ ३ ॥ एवं ॥ संसृजतुत्वा । मातरं शिव गोत्रां रुद्राणीं पितामह्यां शिवगोत्रायां-वलविकरण्यां ( अर्घ्येयो-नियमेश्वराय ) ॐॐआत्मतत्वाधिपतये वलवि-करण्यैस्वधानमः ॥१॥ संसृजतुत्वा । मातरं शिवगोत्रां रुद्राणीं प्रपितामह्यां शिवगोत्रायां वलप्रमथिन्यां (अर्घ्ये-योज-नियमेश्वराय ) ॐजुंविद्यातत्त्वाधिपतये वलप्रमथि-न्यैस्वधानमः ॥ २ ॥ संसृजतुत्वा । मातरं-रुद्राणीं वृद्ध-प्रपितामह्यां शिवगोत्रायां सर्वभूतदमन्यां ( अर्घ्ये योज-नियमेश्वराय ) ॐसःशिवतत्त्वाऽधिपतये सर्वभूतदमन्यै-स्वधानमः ॥ ३ ॥ आपःक्षीरं । स्वांस्वांसोमायनमः जले इत्यादि ॥ भगवन्तः अर्घ्यं २ ॥ पितृपितामहौ अमुक-गोत्रौ शिवगोत्रौ रुद्रईश्वरौ समानसपिण्डीकरणे शिवश्राद्धे इदं वामर्घ्यं स्वधानमः ॥ एवं पितृप्रपितामहौ शिवगोत्रौ रुद्रादितिनौ ॥२॥ पितृवृद्धप्रपितामहौ शिवगोत्रौ रुद्रदितिनौ

समान-इदं वां अर्घ्यंस्वधानमः। पितः अमुकगोत्र इदं तेऽर्घ्यं, पितःशिवगोत्ररुद्र समानपिण्डीकरणे इदंतेअर्घ्यंस्वधानमः ॥ एवं ॥ मातृपितामह्यौ शिवगोत्रे रुद्राणीबलविकरिण्यौ समान सपिण्डीकरणे शिवश्राद्धे-इदं वां अर्घ्यंस्वधानमः ॥१॥ मातृप्रपितामह्यौरुद्राणीबलप्रमथिन्यौ ॥२॥ मातृवृद्धप्रपितामह्यौ शिवगोत्रे रुद्राणीसर्वभूतदमन्यौ समानसपिण्डीकरणे-इदं वामऽर्घ्यं स्वधानमः ॥ ३ ॥ मातः इदं तेऽर्घ्यंस्वधानमः ॥ पवित्रंनिवार्य ॥ पितामहाय गन्धःस्वधानमः । सद्योजातं प्रपद्यामि पित्रे रुद्राय समानसपिण्डीकरण ॥ सव्येनाऽऽचम्य, अपसव्येन । पितामहाय अर्घःस्वधानमः । पितः एष तेऽर्घः, एतत्ते पुष्पं । पित्रे शिवगोत्रायरुद्राय अर्घःस्वधानमः । धूपदीपवासांसिस्वधानमः ॥ क्षंईशानवक्त्रायनमः । आंप्रभुशक्तयेनमः । दक्षिणाग्रान्दर्भानास्तीर्य । "सव्येन" शुन्धंतां लोका (अपसव्येन) पितृषदनाः पितृषदनमसि-पितृभ्यो ... आच्छादनं वासांसि स्वधा। पितामहस्य प्रति

तामहस्य वृद्धप्रपितामहस्य अर्घ्यदाना । आदित्या रुद्रा । पितुः वा मातुः समानसपिण्डीकरणे अर्घ्यदा न विधिः सर्वैः। वसवे मे सदस्या। पितस्त्वां भजस्व ॥सव्येन। इदमन्न-मिदं देवेभ्यः। रुद्रानन्ताभ्यां शृतमभिधार्य। अपसव्येन। इदमन्नं पितृभ्यः शृतमभिधार्य। प्रक्षाल्य मूलतो। मेक्ष-णमवदधाति। इदं पित्रे शृतमभि। प्रक्षाल्यतुण्डलानिति मेक्षणमवदधाति। अग्नावधिश्रित्य-पुनश्चाभिधार्य। इदं पित्रे शृतमभिघार्य। पित्रे दक्षिणपश्चिमाग्रैःस्तरैः। यज्ञस्य सन्त-तिरसि। श्रियै सोमवत्यै गन्धादि। अग्नौ करवाणि ॐकुरु। सोमायपितृमतेस्वधानमः। अग्नये कव्यवाहनाय अग्नयेआं-गिरसेशिवाग्नयेनमः। तूष्णीं पात्रेषु निक्षिपेत्। इत्यग्नौहुत्वा, येमामकाः क्षीरं घृतं वाऽऽसिच्य। ॐह्रींश्रींपापान्तकारिणि पापं दह-दह पापं हन हन माये माचलेह्रींस्वाहाक्षीरं घृतं वाऽऽसिच्य॥ पुनःद्वितीयचरोः। ये मामका। सव्येन। वैश्व-देवहविर्भ्यो विश्वेभ्यो देवेभ्यः पुरूरवार्द्रवाभ्यां क्षीरं

घृतंवाऽऽसिच्य । विश्वेभ्योदेवेभ्यः रुद्रानन्ताभ्यामऽन्नंनमः २ अन्नं मधु २ पृथिव्यैनमः विष्णवेनमः रुद्रानन्ताभ्यां विष्णो इदं रक्षस्व । विश्वेभ्यो यथोपस्थितं-नमोदेवेभ्यः ॥ अपसव्येन । पितामहायशिवगोत्राय, ईश्वराय प्रपितामहाय शिवगोत्रायसदाशिवाय । वृद्धप्रपितामहाय शिवगोत्राय शिवाय अन्नंस्वधानमः । अन्नंमधु २ पितः समान इदं तेऽन्नं । इदं मधु । पित्रे समान-अन्नंस्वधानमः । अन्नं मधु २ ईश्वरसदा-शिव शिव इदंकव्यं रक्षस्व । पितः समान-इदं तेऽन्नं । पितः शिवगोत्ररुद्र-अन्नंस्वधानमः । पितामहाय-। पित्रे । यथोप-स्थितमऽन्नंस्वधानमः स्वधापितृभ्यः ॥ पयः पृथिव्या । श्रा-द्धब्राह्मण-पुरुषसूक्तादि । अद्यदिने । सव्येन शन्नोदेवी । विश्वे-भ्योदे-पुरूरवा-अपोशानंनमः रुद्रान्ताभ्यां । अपसव्येन । यास्तिष्ठन्ति । अस्त्रमन्त्रेण फट्अस्त्रायफट् । पितामहाय अपो-शानंजलंस्वधानमः । तिलमन्नं च पानीयं । पुनः । यास्ति-ष्ठन्ति । "फट्अस्त्रायफट्" । पितः समानसपिण्डीकरणेश्राद्धे

एतत्ते अपोशानं । पित्रे शिवगो अपोशानं जलंस्वधानमः । प्रा-
श्नातु भवान् । अमृतेन सह भोक्तव्यं, रुद्रादयः कारणा ॥
स्त्रीविषये । प्राश्नतु भवती । अमृतेन सह भोक्तव्यं, रुद्राण्या-
दयःकारणाआगच्छन्तु । यन्मे प्रकामात् । ब्रह्मकर्मसमाधिना
तावत् ॥ दक्षिणाग्रान्दर्भानास्तीर्य । यास्तिष्ठन्ति । फट्अस्त्रा-
यफट् । पितामहाय समान-शिवगोत्रायेश्वरायभूपृष्ठे । शिव-
श्राद्धे अवनेजनंस्वधानमः ॥ आधारशक्त्यै पृथिव्यै, रजस्यै,
क्षीरार्णवाय, सूर्यमण्डलाय, वह्निम, चन्द्रमण्डलाय,सत्त्वाय
रजसे तमसे अकारतत्त्वाय, उका, मकार,नाद,नादान्त,सु-
मनाय उन्मनाय,पराशक्त्यै,व्यापिन्यै ऋग्वेदाय,यजु,साम,
अथर्व, कृतयुगाय, त्रेता, द्वापर,कलि, सहस्रदलपद्मासनाय,
शतद, अष्टदलपद्मासनायनमः ॥ तिलास्तोयं । देवताभ्यः ३
अद्यतावत् वैदिकपिण्डानि३ ततः कन्दं च दत्त्वा ॥ मूलपुरुषः।
अन्नतिलेति । अग्निष्वात्तेभ्यो ३ अद्यतावत्-लंदिव्यं-पिता-
मह शिवगोत्र ईश्वर-ॐजंमःपिण्डःस्वधानमः । अपउपस्पृश्य ।

लंदिव्यं-प्रपितामह सदाशिव ॐजुंसःपिण्डः । लंदिव्यंवृद्ध-प्रपितामह शिव ॐजुंसः । लंदिव्यं-पितः रुद्र ॐजुंसः पिण्डः ॥ एतानि वः पितरोवासांसि । वासांसिस्वधानमः । वीरान्नंस्वधानमः । लेपंनिवार्य ॥ पितामहाय इत्यादि गन्धार्घपुष्पदीपधूपभक्ष्यभोज्यहिमपानादिस्वधानमः। स्त्रीविषये॥ अग्निष्वात्तेभ्यो-लंदिव्यं-पितामहिबलविक्रमणि ॐजुंसः-पिण्डः स्वधानमः । प्रपितामहिबलप्रमथनि, वृद्धप्रपितामहि सर्वभूतदमनि ॐजुंसःपिण्डःस्वधानमः । वासांसि । वीरान्नं ॥ लंदिव्यं-मातः रुद्राणि समानसपिण्डीकरणे ॐजुंसःपिण्डः-स्वधानमः । वासांसि । वीरान्नं । गंधार्घपुष्पभक्ष्यभोज्य-हिमपानादि । सव्येन । वसन्तायनमः । यास्तिष्ठन्ति । ऊर्जंवहन्ती । अस्त्रम-। अक्षयं नः कुलं । ऊर्जासिनमस्कारं । प्रेत पिण्डेषु । तद्विष्णोरिति पुष्पं । वैदिके । त्रैधंकरिष्ये । वसुभ्यो, भागः रुद्रेभ्योभागः आदितेभ्योभागः ॥ (मधुचाऽज्यं) । संसृजतु त्वा ॥ शैवे॥ देवं सुधाकलशसोमेति । त्रैधंकरिष्ये ।

ॐकुरुष्व ॥ ॐऐश्वरोभागः, जुंसदाशिवोभागः, सःशैवो-
भागः॥ ( मधुचाज्यंजलं चार्घः पुष्पं धूपविलेपनम् । वलिं
दधातु विधिवत्पिण्डोऽष्टाङ्गः प्रकीर्तितः)। पितरं शिवगोत्रं
रुद्रं पितामहेशिवगोत्रेईश्वरेपिण्डे (योजयामिवौषट् । कृतं
कृतं समुत्कृष्टं जितं गुप्तमसत्कृतम् । तदस्तु कृतमुत्कृष्टं
परमेशतवाज्ञया ॐह्रींश्रींपूरय पूरय मुखव्रतं नियमेश्वराय)
ॐॐआत्मतत्त्वाधिपतये ईश्वरायनमः ॥ अग्निष्वात्तेभ्यो ३
अद्य लंदिव्यं-पितृपितामहौ रुद्रेश्वरौ ॐजुंसः वां पिण्डःस्व-
धानमः॥ पितृपितामहाभ्यां रुद्रेश्वराभ्यां समालभनं गन्धः
अर्घः पुष्पं स्वधानमः ॥ पितरं शिवगोत्रंरुद्रं प्रपितामहे
सदाशिवपिण्डे (योजयामि-श्वराय) जुंविद्यातत्त्वाधिपतये
सदाशिवायनमः ॥ अग्निष्वात्तेभ्यो ३ अद्यतावत्-लंदिव्यं-
पितृपितामहप्रपितामहाः रुद्रेश्वरसदाशिवाः ॐजुंसः पिण्डः
स्वधानमः॥ पितृपितामहप्रपितामहेभ्यः रुद्रेश्वरसदाशिवे-
भ्यः गन्धार्घपुष्पाणिस्वधानमः ॥२॥ पितरं शिवगोत्रं रुद्रं

वृद्धप्रपितामहे शिवपिण्डे (योज-श्वराय) सःशिवतत्त्वाधिपतये शिवायनमः ॥ अग्निष्वात्तेभ्यो ३ अद्यतावत्। लंदिव्यंपितृपितामहप्रपितामहवृद्धप्रपितामहाः रुद्रेश्वरसदाशिवशिवाः ॐजुंसः वः पिण्डःस्वधानमः॥ अप उपस्पृश्य ॥३॥ वासांसि स्वधानमः, वीरान्नंस्वधानमः। पिण्डलेपं निवार्य ॥ पितृपितामहप्रपितामहवृद्धप्रपितामहेभ्यः शिवगोत्रेभ्यः रुद्रेश्वरसदाशिवशिवेभ्यः समानसपिण्डीकरणेशिवश्राद्धेगन्धार्घपुष्पधूपदीपभक्ष्यभोज्यतिलमधुहिमपानादि स्वधानमः ॥सव्येन ॥ आचम्य । वसन्तायनमः। अपसव्येन। यास्तिष्ठन्ति। ऊर्जं वहन्ति। फट्अस्त्रायफट्। अक्षय्यं नः कुलंऊर्जासिनमस्कारंकरोमिनमः ॥ "मातृविषये" ॥ देवं स्वधाकलशइति पुष्पं॥ त्रैधं करिष्ये ॐकुरुष्व॥ बलविकरिण्याभागः, बलप्रमथिन्याभागः, सर्वभूतदमन्याभागः ॥ (मधु चाज्यं जलं चार्घः) मातरं शिवगोत्रांरुद्राणीं पितामह्यां शिवगोत्रायां बलविकरिण्यांपिण्डे ( योजयामि-मुखव्रतं नियमेश्वराय )

ॐआत्मतत्त्वाधिपतये बलविक्रमण्यैस्वधानमः ॥ अग्नि-ष्वात्तेभ्यो ३ अद्यता-लंदिव्यं-मातृपितामह्यौ रुद्राणीबल-विकरिण्यौ एष वां पिण्डः स्वधानमः ॥ मातृपितामहीभ्यां गन्धार्घपुष्पाणि ॥ १ ॥ मातरं रुद्राणीं प्रपितामह्यां बल-प्रमथिन्यां पिण्डे ( योजया-मेश्वराय ) जुंविद्यातत्त्वाधि-पतये बलप्रमथिन्यैस्वधानमः॥ अग्निष्वात्तेभ्यो ३ अद्यता-वत् लंदिव्यं-मातृपितामहीप्रपितामह्यः रुद्राणीबलविकरि-णीबलप्रमथिन्यः एष वः पिण्डःस्वधानमः ॥ मातृपिता-महीप्रपितामहीभ्यः गन्धार्घपुष्पाणि ॥२॥ मातरं रुद्राणीं वृद्धप्रपितामह्यां सर्वभूतदमन्यां पिण्डे ( योजयामि-नियमे-श्वराय ) सःशिवतत्त्वाधिपतये सर्वभूतदमन्यैस्वधानमः ॥ अग्निष्वत्तेभ्यो ३ अद्यता-लंदिव्यं-मातृपितामहीवृद्धप्रपिता-महीवृद्धप्रपितामह्यः रुद्राणीबलविकरणीबलप्रमथिनीसर्व-भूतदमन्यः एष वः पिण्डःस्वधानमः ( अपउपस्पृश्य ) ॥ वा-सांसिस्वधानमः । वीरान्नंस्वधानमः ॥ मातृपितामहीप्रपि-

तामहीवृद्धप्रपितामहीभ्यः समानसपिण्डीकरणे शिवश्राद्धे, गन्धार्घपुष्पधूपदीपभक्ष्यभोज्यतिलमधुहिमपानादिस्वधा-नमः ॥ सव्येनाऽचम्य । वसन्तायनमः ॥ अपसव्येन । या-स्तिष्ठन्ति । ऊर्जंवहन्ती ॥ फट्अ-। अक्षय्यं नः । ऊर्जासि नमस्कारं करोमिनमः ॥ पिण्डेपुष्पं । आंप्रभुशक्तयेनमः ईं-ज्ञानशक्तये, ऊंक्रियाशक्तये, लंसद्योजातादिवक्त्रैः सह पूजयेत् ॥ आग्नेयं मण्डलं भित्त्वा भित्त्वा तु सूर्यमण्डलम् । शशिम-ण्डलमुद्धृत्य दश द्वादश षोडश । एताः कला विलीयन्ते तथा सप्तदशीकला । अमाकलेति विख्याता विशेत्प-दमनामयम् । तस्मै शक्तिकलास्फारसाम्यरस्यैकहेतवे । नमः पिण्डोऽस्तु रुद्रेशसदाशिवशिवात्मने ॥ पितृपिता-महप्रपितामहवृद्धप्रपितामहेभ्यः रुद्रईश्वरसदाशिवशिवे-भ्यः । वा । मातृपितामहिप्रपितामहिवृद्धप्रपितामहीभ्यः रुद्राणीबलविकरिणीबलप्रमथिनीसर्वभूतदमनीभ्यः वा-सांसिस्वधानमः ॥ इति पुष्पपूजा ॥ अद्यतावत् पाथेयं

नित्यान्नम् । मामेक्षिष्ठाः । सावित्राणि नैवेद्यम् ॥ विकिरं । सर्वमन्नं । अस्मत्कुले प्रमीता ये पतिताः समयद्विषः । दग्धा अदग्धाः कुगतयस्तृप्ता यान्तु परांगतिम् । ते तृप्यन्तु स्वधां वौषट् ॥ प्रेत्ये । तिलक्षीरविकिरीकृत्य । ये केचित्समये लुप्ता भूताः कर्मवशानुगाः । इहैव समयोच्छिष्टं बलिंगृह्णन्तु ते तृप्यन्तु स्वधांवौषट् ॥ सव्येन । ये रौद्रा रौद्रकर्माणः शिवयागे बहिष्कृताः । इत्यन्नं क्षिपेत् ॥ आचम्य । अपसव्येन । पितामहाय प्रपितामहाय वृद्धप्रपितामहायआचमनीयंस्वधानमः॥ पित्रे वा मात्रे आचमनीयं ॥ सव्येन । विश्वेभ्यो देवेभ्यः, पुरूरवार्द्र-कालकामाभ्यां रुद्रानन्ताभ्यां आचमनीयंनमः ॥ अपसव्येन । यन्मेरामेत्यर्धप्रदक्षिणम् । नमोऽस्तु सर्वयोगिभ्यः । यास्तिष्ठन्ति । "फट्अस्त्रायफट्"। पितामहाय दक्षिणायै, मात्रे दक्षिणायै । अभिरमन्तु ॥ ततोऽक्षय्य ॥ पात्रचतुष्टये । गन्धोदकतिलैर्मिश्रं ॥ संसृजतुत्वा (पृ० ३९४-१३) ॥ पितरं शिवगोत्रं रुद्रं पितामहे ईश्वरे अक्षय्ये

